वाणीं भजत गैर्वाणीम्



# गैर्वाणी



## मासिकी पत्रिका

संस्कृतभाषाप्रचारिणी सभा, चित्तूरु. (आ. प्र.) भारतम्.

संपुटः १० | 15 MAY 1972 | क्रमांकः ५









परीधावि-
ज्येष्ठांकः

मूल्यम्
०-४० पैसाः

# विषयसूचिका










# कथं भोक्तव्यं? कथं वा मोक्तव्यं?

वृक्षे मधु कक्षे मधु
सानुनि मधु जानुनि मधु
हस्ते मधु मस्ते मधु
रसना मधु वसनं मधु ।। कथं ।।

पदे पदे मृष्टान्नं [illegible]
गले गले पंचमः स्थले स्थले च कांचनम्
बृन्दे बृन्दे च वैष्णवं स्पन्दे स्पन्दे च तांडवम्
काले काले च काकली बाले बाले च चातुरी ।। कथं ।।

एकत्र शास्त्रचर्चा अपरत्र साहितीवर्चः
अन्यत्र शोधबोधः परत्र वेदास्वादः,
कुत्रचिद्विचित्रप्रसंगः कुहचित्सज्जनसंगः
क्वचित्संस्कृतरङ्गः सर्वत्र आनन्दतरङ्गः ।। ।। कथं ।।

नवदेहली जयकाहली दध्मौ
विश्वसंस्कृतसम्मेलने मेलने,
विश्वप्रजाव्रजश्रुतयः पूरिता आनन्दरवेण
प्रदिशो दिशश्च प्रपूरिता हर्षकोलाहलेन ।। ।। कथं ।।

# सम्पादकीयम्

## भभावल्यामन्तकस्सन्निविष्टः

स्वातंत्र्यसंपादनानन्तरं नायका अघुष्यन् संस्थानाधिपानां जमींदाराणां दंष्ट्राः उत्पाटये रन्निति। तथैव ते अकुर्वन् सप्तशताधिक संस्थानानां विल-
शया। दुर्बला जमींदाराश्च लीलयैव पातिताः स्वपदात्। एवं च ये स्वराज्योद्यमे कांग्रेसस्य सहायभूता आसन् तेषामेव शिरसि निहितो हस्तः। महापारिश्रामिकाश्च एव मेव धर्षिताः धर्ष्यन्ते चाधुनापि नितराम्। संस्थानविध्वंसनमात्रेण नासीत् नायकानां तृप्तिः तेन ते उपाक्रमन् संस्थानप्रदत्तमान्यक्षेत्राण्यप्यपाक्रष्टुं। तत्कार्ये यदा ते सफला अभवन् तदेदानीं

पुनस्ते सामान्य भूस्वामिनां कण्ठान् कर्तितुं खड्गमदस्थापयन्। एतावत्कालं यावत् राजकीयचर्यासु आनन्दताण्डव माचरन्तः भूस्वामिनः इदानीं भूगरि-
तत्पूर्वांगत्वेन च राष्ट्रपतेः अधिशासने हठादाघोषिते च हस्तान् मर्दयन्ति। नागरिक सम्पत्तेः परिमितिनिर्णयं अनुमोदमाना एव ते क्षेत्रपरिमितिं विरुन्धन्ति। अधिकारिकाः प्रायशः यद्यपि महाक्षेत्रपाला एव तथापि स्ववाचालतादोषफलितं, स्वासूयाकारण दुर्नीति पाचितं चैतद्विषफलं अनिच्छयापि गिलेयुरेव नियतम्।

बलवा नपि खलु भुजगो म्रियेत सत्यं पिपीलिकाभिरपि। अचिरेणैव नवजमीनधराः अल्पेनैव कालेन नहुषत्व मेष्यन्ति। कस्मिश्चित् ग्रामे गृहे दह्यमाने परिसरगृहस्थाः तदीयाग्नि अनिर्वाप्य, तत्रस्थानि काष्टादिवस्तूनि अपहृत्य स्वगृहमानयन् येन स्वगृहाण्यपि तेनैवाग्निना अदह्यन्त। एवमेव स्वापदं प्रत्यासन्नमजानाना मूढा नायकवृकाः क्षेत्राक्रमणसिद्धांतं यावच्छिखरं परिपोष्य तस्मिन् शिखरे विच्छिद्य आत्मन्येव पतिते अद्य आर्तनादान् कुर्वन्ति। स्वक्षेत्रविस्तारं संरक्षितुं बहुधा चेष्टन्ते बहुलपन्ति बहु क्लिश्यन्ति च। अथापि संदीप्ते भवने कूपखननोद्यमवत् एषां चर्चाः निरर्थका एव भविष्यंति।

अद्य दशयाकर भूस्वामी स्वतनयेषु द्वित्रेषु विभक्तस्वसंपत्तिः तान् दरिद्रानेवावस्थापयिष्यति। ते च स्वसन्तानेषु विभक्तक्षेत्रा तान् अकृषीवलान् एव विधास्यन्ति। अन्ततः सर्वे च क्षेत्रकृषिविषयं आयहीनं कृषीवलस्य भारायैव संपद्येत। तदा च खद्दरसंस्थाया इव कर्षकसंस्थाया अपि सर्वकारेण सर्वसाहाय्यमाचरणीयं भवेत् येन सर्वकारकोशः क्षीयेत, आहारवस्तुमूल्यानि च अधिरोहेयुः।

तद्यथा तथा वास्तु। अत्रत्विदं प्रत्यक्षमनुभूयते यत्–संस्थानध्वंसनसमयसन्तोषः, देव ब्राह्मणक्षेत्रहरणजानन्दः, परिश्रमनिर्वाहिक संक्लेशनहर्षः सर्वापि पश्चात्तापरूपमापद्य नायकान् बाधते। नैनावता एतदवसितं, परिश्रमाणां अभावे क्षेत्राणामुपभुज्यते माधातिष्ठन्ते ये दुर्लभसुखान्यनुभवन्तीदानीं ते अपि अचिरेणैव कालेन महत्यां विपदि पतेयुः पश्चात्तपेयुश्च स्वकृत्येषु।

सर्वकारो वा महाक्षेत्रकृषि निर्वर्तन नीतिं आकस्मिकतया लघुक्षेत्र कृषिपद्धतेः कुतो पर्यावर्तयतदिति नैव ज्ञायते। एतया नीत्या च सकलमेव भारतं आकुली भविष्यति अन्नदरिद्रं भिक्षापात्रमलंबिस्यते च।

अनालोचितकार्याणि फलन्ति विषतिन्दुकम्।
यद्बहिस्सुन्दरं तिक्तसारं प्राणहरं नृणाम्॥



# अंधान्धन्यायः

" अवरः "

अन्धः स्वयं न पुरस्सरति; अन्येन नीयमान एव गन्तुं शक्नोति । तदात्वे एव स समीचीने मार्गे गच्छन् सुखेन गम्यस्थानं प्राप्नोति । यदि नेताऽपि अन्धस्यात् तर्हि उभयोरपि नेतुः अन्धयोः पदे पदे पीतनाधकाशः न सभाध्यते ।

नैवं शङ्क्यं अन्धस्य नीयमानत्व मेव नेतृत्वं न कदाऽपि, सत्येवं अन्धस्य अन्धानुगमनं कथं सम्भवतीति । अन्धोऽपि हि स्पर्शज्ञानेन करस्थ लगुडेन इतस्ततः पुरः पश्चाच्च परामर्शेन यथोचित ज्ञानवान् सन् प्रवर्तते । यद्यपि अस्य प्रवृत्तिः चक्षुष्मत इव निश्शंकं निर्भयं च न भवति; तथापि मन्दं मन्दमपि वा पूर्वोत्तर परामर्शेन वा इत स्ततः परिशीलनेन वा स गमनसामर्थ्यं सम्पादयतीति प्रत्यक्षसिद्धम् । अतः स्वयं प्रवर्तमानस्य तस्य अन्यान्धानुनेतृत्वमपि सम्भवत्येव ।

स्वयं गमनं वाऽस्तु अनुगमनं वाऽस्तु उभयमपि अंधस्य विलम्बित मेव भवति । कुत इति चेत् तस्य पतनभीतिः पदे पदेऽप्यनुवर्तते । अस्यां अवस्थायां तदनुयायी चे दन्यः कश्चिदन्धः पृष्ठलग्नस्सन् भवति तर्हि तस्य गमनं कीदृशं भवेत् ? तदपि विलम्बित मेव सशङ्कमेव; पूर्वस्य पतने तदनुयायिनोऽपि

(शिष्टं २१ पृष्ठे)

# कालिदासस्य काव्यशैली

लेखकः श्री ति. गो. अनन्तसुब्रह्मण्यम् . तिरुपति.

[पूर्वानुबन्धः]

स्वकरुण प्रसंगेन मेघदूते अल्पकालव्यवधानेन यक्षः अतिदुखमनुभवति तत्र कविः शोकरसं परां काष्ठां आरोपयति । तथैव दुष्यन्तः स्वपत्नीत्यागेन उद्भूतं विरहमसहमानः व्यथते । रघुवंशे अजस्य धैर्यं छिन्नं भवति वियोगेन ।

विललाप स बाष्पगद्गदं सहजामप्यपहाय धीरताम् ।
अभितप्तमयोऽपि मार्दवं भजते कैव कथा शरीरिषु ॥

अनेन श्लोकेन कालिदासस्य करुणरसवर्णनकौशलं अस्माभिः द्रष्टुं शक्यते ।

कालिदासस्य काव्येषु प्रेम्णः सौन्दर्यं सम्यक्तया ज्ञातुं शक्यते। ऋतुसंहारकाव्यं कालिदासस्य कृतिषु प्राथम्यमावहति । तत्काव्यरचनाकाले कालिदासस्यानुभवः काव्यविरचने प्रौढत्वञ्च अस्माभिः ज्ञातुमशक्यम् । कविः ऋतूनां विभिन्नस्वरूपं सौन्दर्यञ्च वर्णयति । तद्वर्णने कवेः भावकौशलं न दृश्यते । किन्तु तरुणतरुणीनां मानसिकप्रेम्णः आविर्भाव एव कविना सूच्यते । अपि तु इदं प्रेमचित्रणं कवेः स्थूलरूपं बाह्यञ्च ।

द्वितीयकृतौ मालविकाग्निमित्रे कवेः कलानैपुण्यं, तेन सह नायिकानायकयोः प्रेमातिशयश्च दृष्टिगोचरे पतति । कविः कथाद्वारा प्रेम्णः स्वाभाविकंमनोविकासं कुमारसंभवे व्यञ्जयति । कामपीडया पार्वती शिवं

प्राप्तुं प्रयतते, किन्तु सफलत्वं न याति। अनन्तरं बाह्यप्रेम त्यक्त्वा आन्तरङ्गिकप्रेमस्वरूपया भक्त्या तपश्च करोति। पार्वत्याः कठोरतपोभिस्सन्तुष्टः शम्भुः प्रत्यक्षीभूय तां अङ्गीकरोति।

विक्रमोर्वशीये नायिका दैवीरूपिणी। तथापि मानवीयप्रेम्णि आसक्ता भवति। मेघदूते विवाहानन्तरं यत्प्रेम तस्य औन्नत्यं वर्णयति कविः। रघुवंशे शाकुन्तले च स्वप्रेम्णः पराकाष्ठां प्राप्य तद्रसमनुभूय वर्णयति। अतः कालिदासस्य प्रेम्णः अतिशयितत्वप्रतिपादनमेव लक्ष्यमिति ज्ञायते।

कालिदासपोषितस्य प्रेम्णः लक्ष्यं सामान्यकामविकारः न भवति। किन्तु उत्तमोदारप्रेमातिशयः। स कामरूपो भवति। कामरूपवर्त्मना आध्यात्मिकज्ञानस्य प्रतिपादनं क्रियते कविना।

यक्षस्तत्पत्नी यक्षिणी, दुष्यन्तः शकुन्तला, शिवः पार्वती, विक्रमः उर्वशी एतेषां चरित्रकल्पनेन प्रेम्णः औन्नत्यं सम्यक् प्रतिपाद्यते। मध्ये मध्ये विदूषकद्वारा उचितेनोपयोगेन च शृङ्गारसः समीचीनतया परिपोष्यते। मालविकाग्निमित्रे विदूषकः स्वकार्यघटनेन प्रमुखः प्रसिद्धो भवति। परन्तु विक्रमोर्वशीये विदूषकः स्वकर्मणा मूर्खवद्भाति।

कुमारसंभवे हिमालयवर्णनावसरे गिरिगह्वरेषु किन्नरमिथुनं क्रीडति। किन्नरी चेलांशुकस्यापाकरणेन लज्जिता सती गन्तुमिच्छति। तदा किन्नरः तामाकृष्य, आलिङ्ग्य च चुम्बितुं प्रयतते। तत्समये मेघः कश्चित् तयोः किन्नरयोः मध्ये यवनिकावद्विलम्बते। अत्र कामक्रीडावर्णने शृङ्गाररसस्याभासत्वं निवार्य रसयति कविः।

रूपस्य दर्शने पापं न संभवति। अतः तद्रूपस्य औन्नत्यमपि दृश्यते। चक्षुषोः साफल्यं रूपदर्शन एव खलु? रूपसद्गुणयोः सहवर्तित्वात् रूपदर्शनेन गुणाः

परिज्ञायन्ते । एतमर्थं मनसि कृत्वा कविः "यदुच्यते पार्वति पापवृत्तये न रूपमित्यव्यभिचारि तद्वचः" इति बटुमुखेनाभणत् ।

कालिदासः शृङ्गाररसवर्णनं न स्पष्टतया करोति । किञ्च तद्वर्णनं तु रुच्युत्पादकत्वेन तथैव लोकमर्यादामनुल्लङ्घ्य च वर्णयति । न कदापि नीचे मार्गे अवतरति । कालिदासः अश्लीलवचनानि न ब्रवीति । तत्समये एव प्रतिपाद्यं च न विस्मरति । अवाच्यवचनविषये स्वकल्पनानुसारि कवित्वं प्रतिपाद्यते रुचिरया रीत्या । तत्र तत्र स्ववाक्यरचनेषु ध्वनेः एव प्राधान्यं तेन दीयते ।

तपश्चरन्त्या पार्वत्या सह स्वभाषणानन्तरं ब्रह्मचारिरूपी शिवः स्वस्वरूपं दर्शयति । तदा पार्वत्याः चेष्टां वर्णयति कविः स्वरसेन वर्त्मना । शम्भुं वीक्ष्य पार्वती अचला स्तम्भीभूय तिष्ठति । तदा कालिदासः वर्णयति "यथा महाशैलेन रुद्धा नदी इतस्ततः चलितुमशक्ता सती स्तम्भीभूय निश्चला, निस्तरङ्गा तिष्ठति तद्वत्पार्वत्या स्थितिरपि इति" । अत्र कवेः उपमालङ्कारकौशलं परां काष्ठां भजते ।

कालिदासः गृहस्थस्य धर्मं सम्यक् ज्ञातवानिति तस्य काव्येषु दृश्यते । प्रेम इत्येनत् धर्मपालनस्य न विरोधि इति मतं कालिदासस्य । यदि प्रेम्णः नाशो भवति, जीवनमपि दृष्टं भवति यथा– शकुन्तला अतिथिसत्कारं कर्तुं विस्मृतवती सती (शापवशात्) स्वभर्त्रा प्रत्याख्याता । तथैव यक्षः स्वकर्मणि पराङ्मुखः आसीत् दिति कारणादेव स्वपत्नीविरहः तेन अनुभूतः । रघुवंशे एकोनविंशे सर्गे अग्निवर्णः कामिनीमोहेन प्रजापालनं न कृतवान् । अतः सः नाशमाप । किन्तु कर्तव्ये कर्मणि बद्धकङ्कणास्स्युश्चेत् तर्हि शुभान्यपि तैः प्राप्यन्ते यथा– दिलीपः सुदक्षिणा च कर्तव्यपालनमकुरुतां गोसेवाव्रतनिर्वहणेन । अत एव तयोः

पुत्रोत्पत्तिः समभूत् । अपि च पार्वती अतिथिसत्कारान्कृत्वा परमेश्वं पतिमवृणोत् । तथैव दुष्यन्तः स्वर्लोके असुरान् हत्वा प्रतिनिवर्तमानः स्वपुत्रं कलत्रं च प्राप्तवान् । अतः कालिदासः कर्तव्यपालन – धर्माचरणादीनां मुख्यत्वं दत्तवानिति वक्तुं शक्यम् ।

पाश्चात्यविमर्शकाः केचन कालिदासोपरि दोषारोपणं कुर्वन्ति । स सांसारिकबाधानिवृत्यर्थं आध्यात्मिकरूपेण कमपि मार्गं नोक्तवानिति । अस्य दोषस्य निदानं तस्य ग्रन्थानां अपठनमेवेति ज्ञायते । कालिदासस्य पद्धतिः वक्तव्यविषयान्सर्वान् व्यङ्ग्यरूपेण, गूढेन पथा च बोधयति । कालिदासः यं कञ्चन विषयं प्रत्यक्षतया वक्तुं न वाञ्छति । सांसारिकदुःखनिवृत्यर्थं स्वतन्त्रग्रन्थः कविना नाऽक्रियत इत्येतदङ्गीक्रियते । तथापि तत्सम्बन्धिनः विषयाः तत्र तत्र काव्येषु विलिखितास्सन्ति । त्यागस्य औन्नत्यं, विषयलोलुपतायाः दुष्टत्वं, देव्याः माहात्म्यं, राज्ञः कर्तव्यं, गुरूणां अभिवन्दनं इत्यादिविषयाः तत्काव्येषु दरीदृश्यन्ते । सम्यक् पठित्वा ज्ञातव्या एते अंशाः ।

कालिदासः प्रसंगानुसारेण कौटुम्बिक - सामाजिक - व्यवहारान् उल्लिखति । मातापित्रोः प्रेम, पतिपत्न्योः रागः, बन्धुमित्रयोः स्नेहः, पितापुत्रयोः वात्सल्यं इत्यादि विषयान् मध्ये मध्ये काव्येषु मनोहारित्वेन निवेशितवान् ।

चतुर्दशवर्षवनवासं प्रापितवतीं कैकेयीं प्रति रामः अत्यादरं प्रदर्शयति "हे मातः, मत्पितुः स्वर्गगमनाय भवत्येव कारणभूता । सः सत्यात् किञ्चिदपि न स्खलितुं शक्तः । अत एव भवत्यैव पिता रक्षणीयः" इति । "गुरुजनानां अनुल्लंघनीया आज्ञा" "प्रतिबध्नाति हि श्रेयः पूज्यपूजाव्यतिक्रमः" इत्यादिवाक्यानि तत्र तत्र काव्येषु विलसन्त्येव । अतिथिपूजनं, पण्डितादरः, गार्हस्थ्यधर्मः, आध्यात्मिकज्ञानविचारः,कलाया औन्नत्यं इत्यादिविषया अपि

तस्य काव्येषु पश्यामः ।

कालिदासः भारतीयसंस्कृत्यामपि विशेषप्रज्ञावान् । तस्य रचनासु तत्र तत्र संस्कृतेरौन्नत्यं व्यज्यते ।

रघुवंशकाव्ये राजदिलीपद्वारा नन्दिन्याः गोः सेवा, पुत्रप्राप्तेः महत्वं इत्यादिवर्णनेन भारतीयसंस्कृतेः औन्नत्यं दृश्यते । भारतीयकुलाचारपरिज्ञानेपि प्रवीणः कालिदासः । रघुवंशे, शाकुन्तलेऽपि च तस्य प्रावीण्यं व्यज्यते । कालिदासः न केवलं - प्रेम - सौन्दर्यवर्णनविषयमात्रे कुशलः, किन्तु संस्कृतकुलाचारवर्णनेपि स्वनैपुण्यं दर्शयति ।

किञ्च सः "विधिरेव गरीयान्"ति वाक्यस्य प्रामुख्यं ददाति । मालविका विधिवशात् एकहायनपर्यन्तं अज्ञातवासरूपेण दुःखानि असोढ । तथैव अशुभग्रहदशावशात् शकुन्तला पतिविरहं अन्वभवत् । इमं विषयं ज्ञात्वा कण्वः सोमतीर्थं गत्वा शान्तिकं कर्म आचरत् । अतः कालिदासः विधेः प्राबल्यं तच्छान्तिकर्मणां तन्निवारकत्वं तदा अवर्णयत् । सीता वक्ति "मत्त्यागः रामस्य दोषो न, अपि च ममैव जन्मान्तरपातकानां विपाकविस्फूर्जथुरप्रसह्यः" इति रघुवंशे । एतेन जन्मान्तरीयपापपुण्यानां प्राधान्यं दीयते कविना । किन्तु मनुष्यजन्मनि सुखदुःखानि चक्रनेमिक्रमेण भ्रमन्ति । अतः सुखदुःखसंकलितः अयं लोक इति कविः प्रतिपादयति स्वकाव्येषु ।

महाकविः नीत्यामपि अतीव प्रज्ञावान् । स्वकाव्यनाटकेषु सर्वत्र नीतेः स्थानं प्राधान्यतया ददाति । भारतीयमर्यादाभूतः कविः "विकारहेतौ सति विक्रियन्ते येषां न चेतांसि त एव धीरा" इति, किञ्च "सर्वत्र समदर्शिनः" इति न्यायानुसारेण कविः "स्थितः पृथिव्या इव मानदण्डः" इति स्वस्य माध्यमिकगुणत्वं दर्शयति । वस्तुतः व्यासवाल्मीकिभिस्सह तुल्यत्वेन वक्तुं शक्यः । कालिदासस्य मतिः अद्वैतभावनायां एव लीनोऽभूत् "वागर्थाविव संपृक्तौ" "ममापि च क्षपयतु नीललोहितः" इत्यादि वाक्यैः दृश्यते । ★

# विश्वे संस्कृतभाषाप्रभावः

लेखकः श्री खंदविल्लि सूर्यनारायणशास्त्री

साम्प्रतम् संस्कृतभाषाऽध्ययनम् प्रपंचस्य कृते सर्वैः प्रकारैः सर्वाऽभ्युदयसंपादकमिति अत्र व्यासे संग्रहेण प्रदर्श्यते । आदौ

## भाषाशास्त्रदृष्ट्या सर्वस्मिन् जगति संस्कृतप्रभावः

कोलंबिया, षिकागो, वाषिंग्टन् विश्वविद्यालयेषु विद्यमानाः भाषाशास्त्रपंडिताः सुदीर्घगवेषणानंतरम् स्वेषाम् विमर्शसार मेवं प्रकटितवन्तः यत्–

"न केवलमेषियाया एव प्रत्युत समग्रस्याऽपि यूरोपस्य भाषाजिज्ञासूनाम् संस्कृतवाचोऽनुशीलन मावश्यकं, यतः संस्कृतेन सह सर्वासाम् भाषाणाम् निकटतमः संपर्कः" इति । एवं "रूस्" देशीयस्य "लूयीरेणु" पंडितस्य भावः संस्कृतभाषाविषयक एवं विधः यत्–"संसारस्य सर्वा एव भाषाः संस्कृतप्रभाविताः । एषियायाः अनेकदेशानाम् भाषाः संस्कृतशब्दान् वहन्ति" इति । एवं भारतीयभाषाशास्त्रपारंगतानां द्विसहस्रवर्षेभ्यः प्राक् विद्यमानानाम् यास्काऽचार्यादीनाम् भावः उक्तवैदेशिकपण्डिताभिप्रायेण सह समैक्यं भजते । अत्र विषये निरुक्तवचनान्येव प्रमाणम् । अत एवाऽस्याः भाषायाः "आद्यप्रकृतित्वम्" संगच्छते ।

## देशांतरेषु संस्कृतभाषाव्याप्तिः

"जर्मन्" विश्वविद्यालये "महामहोपाध्याय" पदवीविराजितः "आल्डडोर्फु" पण्डितः "जर्मन्याम् संस्कृताऽध्ययनम्" इत्येनम् विषय मधिकृत्य एवम्

कथयामास यत् "जर्मन्देशीयः कश्चिदेकः पण्डितः (गेथे) कालिदासीयम् शाकुंतलम् स्वशिरसि संस्थाप्य परवशस्सन् यदि नाट्यम् करोति, तत्रत्योऽन्यः पण्डितः मनुधर्मशास्त्रपठनम् चिकीर्षति; एव मत्रत्योऽन्यतमः पण्डितः औपनिषदपाठेन चित्तशान्ति मुपलब्धुकामश्चेत्, अपरः पण्डितः योगशास्त्राऽभ्यासेन दीर्घाऽयुष्यम् लिप्सते" इति।

एवं शर्मण्यदेशीयः जर्मन् भाषाशास्त्रपारंगतः "मेक्सुमुल्लर्" महाशयः संस्कृतभाषासेवायै स्वजीवितमुख्यकालमतिमहितम् अंकितं कृत्वा, तदध्यनप्रभावप्रभावितस्सन् "Sacred Books of the East Series" नाम्नीम् महतीम् ग्रन्थमालाम् संस्थाप्य तन्नाम्ना स्वरचित जर्मन्भाषामय-बृहत्संपुटानाम् संबंधिभिः भारतीयपवित्रविज्ञानस्य गुरुत्व महत्व पटुत्व प्रकाशकैः विविधैः विश्वजनीनभावैः समग्रयूरोपस्य नेत्रोन्मीलनम् कृतवान्; निरूपितवांश्च एवं यत्—

"भारतदेशः सोदरदेशीयानामिहपरसाधकं यथा ज्ञानपन्थानम् संदर्शयामास" इति। एवमेष महाशयः "मोक्षमूलरभट्ट" इति कृतसादरनामधेयः संस्कृतसाहित्यामृतसेवया सर्वेभ्योऽप्यधिकतमम् प्रभावित आसीदित्यस्य निदर्शनान्यनेकानि संति। महाशयस्य अस्य ऋग्वेदग्रन्थपीठिकायां श्लोक मिमम् श्रृणुत—

शर्मण्यदेशजातेन गोतीर्थपुर (आक्सुफौर्ड) वासिना
मोक्षमूलरभट्टेन भाष्यमेतत् विशोधितम्॥

एमम् सर्वदेशीया सर्वभाषाश्च सर्वप्रभावभासुरेण संस्कृतेन प्रभाविता इति यत् तस्य मूलकारणान्यस्माभिः अवश्यं ज्ञात-

व्यानि । यद्योवं कियेत, संस्कृतस्य विश्वमोहनकारकस्य विश्वकल्याणभाजनत्वम् विस्पष्टम् ज्ञायेत । वक्ष्यमाणाः ये उत्तमोत्तमोदारभावाः सर्वदेशीयेभ्यः सर्वाऽभ्युदयसंपादकाः, ते संस्कृतभाषाजनन्या एव सर्वैः मानवैः संग्रहीतुम् शक्यंते, तत्र

## सर्वभूतेषु समभावना

संस्कृते सर्वत्र समभावनाबोधकाः—

आत्मवत् सर्वभूतानि यः पश्यति स पश्यति ।
आत्मवत् सर्वभूतानाम् एकः प्रियहिते रतः ॥

## मा हिंस्यात् सर्वभूतानि

एवमादयस्सूक्तयः सम्यक् पाठितास्सत्यः केषांचित् मूर्खाणाम् वैरभावविवशनाम् चित्तेषु सर्वत्र समदर्शनत्वरूप मुदारभाव मुत्पाद्य सोदरमानवेषु, एवम् सोदरदेशेषु च विषये तेषाम् अकारणद्वेषभाव मुन्मूलयंतीन्यत्र न कश्चिदपि संदेहः ।

सांप्रतम् यदि वयं तत्वतः पश्यामः भौतिकविज्ञानविकासरूपेण प्रवर्धमानः नागरिकदेशीयानाम् आधुनिकः अण्वस्त्रसर्जनरूपः पारस्परिकः प्रतिद्वंद्विताभावः, नूनमेकैकस्य नागरिकमानवस्य मानसं भीतिभावपरीतम् द्वेषभावदग्धं च करोति । महाऽनर्थकरोऽयं द्वेषभाव एव स्वेषाम् सज्जनानाम् च जीवितानि, शान्तिभावशून्यानि दुःखभाजनानि च करोति । एष विषयः सर्वदेशीयानाम् कृते महाऽनर्थदायक एव खलु । एतस्मादपि महाऽनर्थात् विद्विष्टमानवानुद्धर्तुम् उक्तरूपेण परमसाधनम् संस्कृतमेव, यतः सर्वत्र समदर्शनत्वप्रबोधकाः सर्वेभ्यः सर्वाभ्युदयसंपादिकाः सुमनोहरसूक्तयः अत्रैव अमरवाण्याम् परस्सहस्रं भ्राजन्ते । अनया समदर्शनत्वभावनया, नो चेत् समैक्यभावनया विभिन्नभावकर्तृकः परस्परद्वेषभावः विलीयेत ।

(अनुवर्तते)

# श्रीपारिजातापहरणकाव्यम्

ले० श्री. न. च. वेंकटताताचार्यः, विशाखपट्टणम्.

[पूर्वानुबन्धः]

पश्यात्र सिद्धपथिकान् तरुणीमणे त्वं
ये भूर्जपत्र निवहे सुरधेनुदध्ना ।
संमिश्रितोदन समभ्यवहारतृप्ताः
गच्छन्ति शीतगिरि कूटमनल्पहर्षाः ॥

पश्याधुना श्रवणभूषणरत्नजालान्
विद्याधरान् विमलमौक्तिकहारयुक्तान् ।
संबद्ध खड्गनिवहान् शिवपादभक्तान्
उष्णीव मण्डित वराङ्गयुतान् प्रसिद्धान् ॥

किं पश्यसीह दयिते समुपात्तगीतान्
गन्धर्वनामसहितान् सुविमानचारान् ।
अर्वाननान् प्रथित किंपुरुषाननेकान्
नृत्वेप्सरो जनगणस्य सहायभूतान् ॥

यक्षा इमे तरुणी गानकला विशिष्टाः
एते च गुह्यकवराः कुशलाश्च हास्ये ।
अन्ये च सन्ति गरुडा इति कथ्यमानाः
अत्रैव सन्ति किल चारणनाम भाजः ॥

पश्येह गङ्गां यमुना सखीं त्वं
शर्वोत्तमाङ्गे नटनं विधात्रीं ।
नेत्राग्निदग्धान् कपिलस्य कोपात्
मोक्षं नयन्तीं सगरस्य पुत्रान् ॥

कुटीर सङ्घान् मुनिपुङ्गवानां विलोकयाशु प्रयातान् सुरम्यान्।
सुरद्रुमैर्दत्त समस्तवस्तु प्रपञ्चसंभावित चत्वरान्स्तान् ।।

रोमन्थयन्तीमिह कामधेनुं विलोकयाशु प्रियभामिनि त्वं ।
या चाप्सरश्चन्द्र सुधादिकेभ्यः प्रकर्ष मास्थाय विराजतेऽत्र ।।

हेमाचलालक तलस्थित शैलराज
सत्पट्टबन्ध सदृशावरणश्चकास्ति ।
तन्मौळिसंस्थितकिरीटवदत्ररम्यः
प्रासादराज इह दृश्यत एव कान्ते ।।

सम्पत् समृद्ध नगरं बरवैजयन्तम्
सर्वात्मना तुलयितुं विफलप्रयत्नाः ।
दिक्पालपट्टण ततिस्त्रपया स्थितेव
सन्दृश्यते विबुधलोक विमानपङ्क्तिः ।।

ये सन्ति धैर्यसहिताः प्रयनप्रदेशे
ये वाचरन् विधियुतान् विविधाध्वरादीन् ।
ये चात्यजन् अखिलमैहिक सौख्यजालम्
ते सर्वथा सुरवधूमुखचुम्बनार्हाः ।।

कान्तापयोधरमहीधरदुर्गदेशे
आवर्तकेषु पृथु मोहमहार्णवस्य ।
शश्वन् निमग्नजन्ता निजसत्क्रियाभिः
एनां पुरीं समधि गच्छति सुन्दराङ्गि ।।

एवं समाख्याय सुरालयस्य प्रशस्तिमात्मप्रियवल्लभायै ।
भूत्वा प्रहृष्टः तदनुप्रपेदे हरिः सुमेरून्नत शृङ्गदेशम् ।।

आकाशमार्गे गरुडस्तदानीं विद्राव्य सर्वान् उपरोधभूतान् ।
स्वीकृत्य तेषां प्रणयप्रणामान् प्रागात् खुरन्यास पथेद्युधेन्वोः ।।

तदा समे शीतलवातपोतैः अपेत देहश्रमलब्धसौख्याः ।
शनैरगच्छन् गगनस्रवन्ती तट प्रदेशं नितराम् प्रहृष्टाः ।।



विश्वसंस्कृतसम्मेलने उपस्थिताः केचनान्ध्रप्रदेशीयाः संस्कृतविज्ञाः

अत्र प्रथमश्रेण्यां यंत्रस्य वामपार्श्वे उपविशन् वृद्धः व्याकरण पितामहः श्री गुंडेराव्हर्कार्महोदयः यः खलु निवृत्तमंडलन्यायाधीशपदवीकः संस्कृतव्याकरण पारीणः अष्टाध्यायी यन्त्रमाविरकरोत् । तस्य महाशयस्य पार्श्वत एव तदुपज्ञं यन्त्रमपि अवस्थापितं संस्कृतरसिकानां नेत्रपर्व करोति । तच्च दर्शने भ्रमद्ग्रन्थरिव वर्तमानं पुस्तकपृष्टाकारविभिन्नस्थलेषु संकेत विशेषांकितं दक्षिणपार्श्वस्थ कुंचिकानिचितं अन्तर्गत दीपगोलमण्डितं कुञ्चिकाधर्षणेन तत्तद्रूपोचितानि सूत्राणि यथाक्रमं तत्तत्स्थानसंख्या निर्दिशति ।

मन्यामहे भारतसर्वकारः एतस्य यन्त्रस्य संपूर्णा परिपोषणाय अविरळप्रचाराय च यथा शीघ्रं सहकुर्यादिति ॥



# जुगुम्फ स कबीरस्य

ले० या. वि. देवास्कर:, वटपत्तनम् .

चकार कार्यं भक्तस्य श्रीरामो भक्तवत्सलः ।
जुगुम्फ स कबीरस्य सुचैलं रघुनन्दनः ।।

अभजदभजद्रामं कबीरो राममानसः ।
रामध्यानपरोभक्तः स्वस्य विस्मृत्य कर्म च ।।

यदा यदा विसस्मार ध्यानमग्नः स्वकर्म सः ।
तदा तदा सुचैलं स, जुगुम्फ भुवनप्रभुः ।।

वीणाहस्तः कबीरः स राममग्नो सदैव सः ।
सदा जुगुम्फ भक्ताय सुचैलं पुरुषोत्तमः ।।

यदा यदा रामरूपः कबीरश्चाभवत्तदा ।
रामो भूत्वा हि भक्तस्य दासः कार्यं चकार च ।।

एकदैवं सुचैलं तत् सुपूर्णमभवत्तदा ।
रामनाम हि सर्वत्र तस्योपरि ददर्श सः ।।

जजागर तदा भक्त उन्मील्यक्षीणि स्वस्य सः ।
अब्रवीत्सुप्रहृष्टः स "क्वासि, क्वासि, रघो! रघो!!"

परन्तु धनुर्धारी सर्वज्ञः सर्वशक्तिमान् ।
सर्वव्यापी सुसंतुष्टस्तत्रैवान्तरधीयत ।।

पितृदेवश्च शत्रुघ्नः कौसल्यानन्दवर्धनः ।
जुगुम्फ स कबीरस्य सुचैलं राघवः सदा ।।

# विशेषसंचिका
# श्रीलक्ष्मीनारायण सहस्रहोमकुण्डक्रतु
# सन्दर्भे

उपरिनिर्दिष्टः क्रतुविशेषः तिरुमले बालाजीसन्निधाने श्रीमद्भिः त्रिदण्डि श्रीमन्नारायणरामानुजजीयर स्वामिभिः २८-६-७२ दिनात् १०-७-७२ दिनं यावत् महावैभवेन निर्वर्तिष्यते। तत्संदर्भे क्रतुविशेषसंचिका काचन प्रकाशयितुं संकल्पिता। आन्ध्रप्रदेश राज्यपालः संचिकाप्रकाशनमहोत्सवं प्रारभिष्यते। बहवः महाभागाः तस्मिन् भागं ग्रहीष्यन्ति।

अतः आगम पंडितैः पांचरात्रवैखानसशैवागमविषयकाः निबन्धाः संस्कृते, आन्ध्रे, द्राविडे, हिन्द्यां, आंग्ले वा विलिख्य प्रेषणीयाः। तैस्साकमेव स्वीयाछायाप्रतिकृतिश्च स्वात्मजीवितचरित्रसंग्रहनिर्देशपूर्वकं यथाशीघ्रं श्रीलक्ष्मीनारायणसहस्रहोमकुण्डक्रतुकार्यालयः, तिरुमलै, चित्तूरु जिला इति संकेतेन प्रेषणीया।



# गैर्वाण्यष्टश्लोकी

लेखकः श्री वि. एस. वि- पाद्दरार्यशिरोमणिः.

गैर्वाणि, पत्रनिलये करुणार्द्रदृष्टया
सम्पश्य देवि परिदेवितमर्तिविद्धम् ।
त्वत्पादपंकजयुगं शरणागतं मां
ज्ञानादिशून्यजनसंकलितं सुदीनम् ॥

यस्याः प्रभावमधिगन्तुमशक्नुवानं
मां ते विलोकय दृशा विविधाधितप्तम् ।
गीर्वाणवाक् द्रविडभूमितले विलुप्ता
"सर्वार्थबोधकगुणा" इति विचिन्तयन्तम् ॥

गैर्वाणि देवि लोकेऽस्मिन् ते कटाक्षं प्रसारय ।
यस्या दृष्टिप्रभावेण वाक्शुद्धिं दधते जनाः ॥

गैर्वाणि यस्त्वां भजते मनुष्यः स पण्डितः स श्रुतिविद् विधिज्ञः ।
तत्पत्रसरार्थविदं भजे तं सुमेधसं सन्ततमाभिजातम् ॥

अज्ञानपूरितमनागमवेदिनं मां
देवि त्वमुद्धर गतं भववारिराशिम् ।
त्वद्भक्तिपोतमवलम्बितुमप्यशक्तं
मोहान्धकारजलधौ पतितं विमूढम् ॥

गैर्वाणीत्र्यक्षरं मन्त्रं ये जनाः पर्युपासते ।
पण्डिताग्रेसरास्तांश्च स कुर्यात् सुधियः सदा ॥

यस्याः पठनमात्रेण मेधा संवर्धते सदा
गैर्वाणीं तां भजे नित्यं सर्वलोकमहेश्वरीम् ॥

गैर्वाणि, वाणी शुभदा परोक्षरसार्थसंयुक्तसुशब्दजाला ।
वेदान्तवेदागमरूपिणी सा त्वत्पादपद्मं शरणं प्रपद्ये ॥



# सुभाषितानि

ले० श्री यन्. रामनाथार्यः

[पूर्वानुबन्धः]

दिग्वाससं गतव्रीडं जटिलं धूलिधूसरम् ।
पुण्याधिका हि पश्यन्ति गंगाधरमिवात्मजम् ॥ ४५१ ॥

Only very fortunate persons are given to behold their children playing about naked and unabashed, with locks of hair on their head and smeared with dust all over the body, resembling Lord Siva

कविः करोति पद्यानि लालयत्युत्तमो जनः ।
तरुः प्रसूते पुष्पाणि मरुद्वहति सौरभम् ॥ ॥ ४५२ ॥

Poet composes verses but it is enjoyed only by greatmen. The tree puts forth flowers but its fragrance is wafted by the wind.

दानाय लक्ष्मीः सुकृताय विद्या चिंता परब्रह्मविनिश्चयाय ।
परोपकाराय वचांसि यस्य वन्द्यः त्रिलोकीतिलकस्स एव ॥ ४५३ ॥

A person is considered really great and respected everywhere, whose wealth is for helping the needy, whose learning is for doing good to others, whose thoughts are for realising the Absolute and whose words are for helping others.

हस्तादपि न दातव्यं गृहादपि न दीयते ।
परोपकरणार्थाय वचने किं दरिद्रता ॥ ॥ ४५४ ॥

It is neither giving from your hands nor from your house. What dearth can there be in uttering words, with a view to help others.

वहेदमित्रं स्कन्धेन यावत्कालविपर्ययः ।
अथैवमागते काले भिन्द्यात् घटमिवाश्मनि ॥ ॥ ४५५ ॥

You will have to carry even your enemy on your shoulders, as long as yours stars are bad. After the return of better days, you may strike him, as you do an earthern ware on a stone.

अन्वयागतविद्यानां अन्वयागतसंपदाम् ।
विदुषां च प्रभूणां च हृदयं नावलिप्यते ॥ ॥ ४५६ ॥

Those who acquire knowledge by tradition from their ancestors, and also those who acquire wealth from their forbearas are never puffed up with pride, be they either scholars or kings.

निस्सारस्य पदार्थस्य प्रायेणाऽऽडम्बरो महान् ।
न सुवर्णध्वनिस्तादृक् यादृक् कांस्ये प्रजायते ॥ ॥ ४५७ ॥

A thing of little value makes great noise. Gold does not give out as much sound as bell metal when struck.

(अनुवर्तते)

# नित्यमर्चामि संस्कृतम्

लेखकः - वैद्यः श्रीरामस्वरूपशास्त्री, संपादकः, बालसंस्कृतम्, बम्बई ८६.

मदीया संस्कृतं माता संस्कृतं च पिता मम ।
गुरुर्मे संस्कृतं शश्वद् बन्धुरेव हि संस्कृतम् ॥
संस्कृतं परमं मित्रं रक्षकं मेऽपि संस्कृतम् ।
संस्कृतं कामधुग्धेनुः संस्कृतं मामकं धनम् ॥
संस्कृतं चाऽस्ति मे धर्मः मम कर्मापि संस्कृतम् ।
जीवनं संस्कृतं चाऽस्ति जीवनस्य फलं तथा ॥
आददे संस्कृतस्यार्थे प्रददे संस्कृताय च ।
अधीये संस्कृतस्यार्थे प्रयत्नः संस्कृताय मे ॥
अशनं संस्कृतस्यार्थे वसनं संस्कृतं मम ।
संस्कृतस्य कृते श्रद्धा नित्यमर्चामि संस्कृतम् ॥

---

## न्यायमाला (चतुर्थपृष्ठात्)

पतन मिति रीतिः। अतः अन्धस्य अन्धानुगमनं सर्वदा भयावहमेव ।

एव मेव अज्ञस्य अज्ञानुसरणं, अकुशलस्य अकुशलानुकरणं, अतीर्णस्य अनुत्तीर्णाश्रयण मित्याद्यप्यूह्यम् ।

गम्यस्थानावाप्तिः लक्ष्य-प्राप्तिः उद्देश्यपरिपूर्तिश्चेत्येत-दभिलष्यते चेत् तर्हि स्वयमस-मर्थोऽपि समर्थं कञ्चिदाश्रित्य कृतकृत्यः कृतार्थश्च भवतीति लोकानुभवः। अतोऽसमर्थस्य समर्थाश्रयणमेव वरीयः।

असमर्थस्य असमर्थाश्रयणं केवलं विफलमित्येव न, अपितु विपत्करमपि सम्भाव्यते इति पूर्वोक्तन्यायस्य तात्पर्यम् ।

# विलोकनं–विज्ञानभवने नवदेहली

"अवरः"

"न हि ज्ञानेन सदृशम्"। तदेव प्रकृष्टं सत् प्रज्ञानं; तदेव विविधं विशिष्टं वा सत् विज्ञानं भवेत्।

## विश्रान्तिः संस्कृतात्मनः

विज्ञानभवनं निर्माणादारभ्य शास्त्रीय - विचारविनिमयस्य आवासभवन मेव जातम्। अद्यावधि संस्कृतस्य तत्र विश्व-व्यापिनो रूपस्यैव दर्शन मभूत्, न त्वन्तर्यामिणः स्वरूपस्य इति मन्ये। विश्व-संस्कृत-सम्मेलनं १९७२ यदायोजितं विज्ञानभवने तन्नूनं उभयविधं सत् अभयप्रद-मासीत्। परिधावी अन्वर्थनामा भूयात्। भारतीयसंस्कृतेः परीवाहः विश्वसंस्कृतसम्मेलन माध्यमेन विश्वतः परीधावी विश्वस्मिन्निति विश्वसिमि नितराम्, ......अस्मिन्नवावसरे निश्वसिमि न सुदीर्घं ......। यदि स मनीषी मुन्षी महोदयः जीवन् विश्वसंस्कृतसम्मेलनस्य भद्रमद्रक्ष्यत् तर्हि संस्कृतात्मा संस्कृतोऽभविष्यन्। विश्वपरिषद्भावनाभावुकस्य मुन्षीमनीषिणः विश्वसंस्कृतसम्मेलन मिद मुभयविधं महानन्दकारक मभविष्यन्। संस्कृतात्मनः तस्य महानुभावस्य भारतसर्वकारेण आयोजितेऽस्मिन् प्रथमविश्व-संस्कृतसम्मेलने आध्यात्मिक-विधया पुनरुज्जीवनं पुनः प्रतिष्ठा वाऽकारीति मन्ये।

## आत्मप्रकाशनम्

दिष्टचा भारतं "उत्तिष्ठत जागृत; प्राप्य वरालिबोधत इति पन्थान मनुसरति। युनेस्[illegible] साहाय्येन इदंप्रथमतया भा[illegible] विश्वसंस्कृतसम्मेलन मायोजि[illegible] मस्मिन् वत्सरे (१९७२) भा[illegible] सर्वकारेण। भारतेऽन्तर्लीना

संस्कृतमूर्तीनां युगपदुत्थापनं, जागरणं, नवदेहली विश्वसंस्कृतसम्मेलनप्रापणं आत्मविलासरूपं वरं प्राप्य निजनिवासं पुनः प्रत्यागमनं च स्वतः स्वरसतश्च (Automatically) सम्पन्नमभूत्। सम्मेलने सामान्यतः यदुद्दिश्यते विशेषतश्च यदभीप्स्यते तत्समीप्सितं अस्मिन् विश्वसंस्कृत सम्मेलनेऽपि सिद्धप्रायम् । भारतीयायाः प्राचीनायाः अर्वाचीनायाश्च परम्परायाः पण्डिताः सुधियः सम्मेलने संभूय महान्तं आनन्दं प्राप्नुवन् । विशिष्य वैदेशिकै र्मनीषिभिस्सहभावेन, वार्तालापेन, विचारविनिमयेन च संस्कृतव्याप्तेः आद्यं सोपान मध्यरोहन्निति निश्चप्रचम् ।

विज्ञानभवने विलोकितानि बहूनि सन्ति येषां मध्ये प्रमुखमिदमभवत् यदाहूताः अनाहूताश्च प्रतिनिधय प्रेक्षकाश्च सर्वे समागत्य निर्दिष्टं कार्यक्रमं उपातिष्ठन् इति । भोजनावासयातायातादिव्यवस्थायां सत्यप्यसौकर्ये किञ्चिदिव कुटुम्बस्वभावमनुस्मरन्तः स्मारयन्तश्च अभ्यागताः सहनशीलतां प्रादर्शयन् । एकस्मिन् भारत एव भिन्नभिन्न प्रदशेभ्यः, विभिन्नमातृभाषाभाषिभ्यः, विविधाचारप्रचारशालिभ्यः, नैकविधाशन-वसनप्रियेभ्यः जनेभ्यः समागताः संस्कृतज्ञाः तत्प्रेमिणश्च एकत्रीभूय विज्ञानभवने संस्कृतनगरे च, समानं भावं संस्कृतस्य कृते प्राप्तुं नैजान् विशेषान् व्यस्मार्षुर्यावत्सप्ताहम् । संस्कृतस्य यदन्ताराष्ट्रीयं स्वरूपं विज्ञानभवने व्यलोकि तस्य आराधनं तज्ज्ञैः प्रेम्णा चेत् अतज्ज्ञैरादरेण गौरवेण च कृतम् । सेवा प्रतिफलं नाभिलषतीति सूक्तिः । विशिष्य इयं स्वच्छन्दसेवकानां विषये युज्यते । आगन्तुकानां अभ्यागतानां वा कृते आवासे वा अभ्यवहारे वा तत्रत्ये दैनंदिने लोकव्यवहारे वा स्वच्छन्दसेवकानां सेवा अत्यन्त मनिवार्यतया अपेक्ष्यते । यदि तादृशी सहायता, या मानवतायाः प्राति-

पदिकरूपा, न लभ्यते विज्ञान-भवने तर्हि "वनेऽपि भवने यथा" इति स्मर्तुं शक्यम्। दूरादागतानां अपरिचितानां विज्ञान-भवनं मयसभाभवनमेव प्रतीयेत। विचारणालयस्य (Enquiry Office) सहायता प्राप्तौ तु तेषामतीव सौकर्यं भवेत्।

## सम्मेलनेऽस्मिन्

चिरादनुभूतानां पुनर्नवीकृताः संस्मृतयः पल्लविताः सम्मेलने। बहोः कालात्पूर्वं दृष्टानां पुनर्दर्शनेन मन्दं मन्दं अनुस्मरणं प्रवृत्तं सम्मेलने। इदं प्रथमतयाऽवलोकितानां पुनः पुनः परामर्शेन नवीना स्फूर्तिर्जाता सम्मेलने। कार्यकर्तॄणां सेवाविधानेन नेतॄणां दिशाप्रदर्शनेन विशिष्टानां शिष्टानां च गम्भीर-भाषणेन, समागतानां संस्कृति प्रतिनिधीनां परस्परविचार-विनिमयेन, सहभावेन, सहकारेण, कुटुम्बवद्वार्तालापेन "वसुधैव कुटुम्बकं" इत्यस्य आधार-शिलायाः स्थापनं कृतमिति मन्ये।

विश्वसंस्कृतसम्मेलने विज्ञान-भवने संस्कृतनगरे नवदेहल्यां यद्यदनुभूतं तत्सर्वं स्मृति - पथे स्थितिं प्राप्य पुनर्मेलनं प्रतीक्षताम्। भारतमेवेति कुतः? यत्किमप्यस्तु राष्ट्रं भूमण्डले; यदि पुनः विश्वसंस्कृतसम्मेलनं क्वापि सम्पत्स्यते तर्हि नूनं स्मृतिपथं गतं तत्सर्वं पुनरुत्थितं जागृतं च भवेत् प्राप्य वरान्निबुद्धयात्।

"जयतु भारतं !
जयतु संस्कृतम् !"






# संस्कृतभाषाप्रचारिणीसभा, चित्तूरु.

## उत्तरायणपरीक्षा फलितांशाः

# Samskrita Bhasha Pracharini Sabha, Chittoor.

## Results of March Examinations 1972.

The following are the Registered numbers of successful candidates who appeared for the Samskrit Examinations held on 1)th 12th and 13th March 1972 by the above Sabha.

### Parichaya

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| | I Class:- | 928 | 929 | 931 | 933 | 1061 | 1069 |
| 1135 | 1141 | 1160 | 1194 | 1263 | 1287 | 1288 | 1289 |
| 1405 | 1410 | 1412 | 1416 | 1422 | 1423 | 1425 | 1427 |
| 1428 | 1429 | 1441 | 1445 | 1446 | 1447 | 1449 | 1450 |
| 1453 | 1455 | 1456 | 1457 | 1461 | 1465 | 1467 | 1473 |
| 1474 | 1539 | 1544 | 1543 | 1547 | 1551 | 1555 | 1556 |
| 1557 | 1583 | 1589 | 1610 | 1613 | 1616 | 1639 | 1640 |
| 1641 | 1642 | 1644 | 1645 | 1651 | 1671 | 1713 | 1714 |
| 1715 | 1716 | 1717 | 1719 | 1732 | 1742 | 1743 | 1745 |
| 1748 | 1769 | 1770 | 1771 | 1772 | 1773 | 1775 | 1800 |
| 1806 | 1811 | 1813 | 1814 | 1817 | 1822 | 1827 | 1880 |

7

1832 1834 1855 1854 1856 1857 1859 1861
1890 1892 1893 1894 1895 1896 1898 1949
1952 1954 1956 1959 1992 and 1998.

II Class:- 859 860 861 879 882 932
937 940 941 1019 1031 1043 1049 1053
1055 1059 1060 1066 1082 1083 1085 1087
1124 1130 1132 1134 1136 1138 1139 1140
1168 1169 1174 1175 1187 1261 1264 1275
1285 1286 1297 1299 1304 1307 1311 1313
1336 1337 1403 1404 1408 1413 1414 1418
1424 1451 1452 1458 1459 1466 1469 1475
1476 1518 1519 1540 1541 1550 1564 1566
1567 1582 1584 1600 1601 1614 1615 1648
1652 1654 1658 1660 1666 1668 1696 1702
1713 1733 1735 1744 1746 1749 1797 1807
1812 1815 1820 1825 1829 1833 1889 1947
1948 1953 1964 1965 1969 1977 1981 1988
1989 1990 1991 1993 1994 1995 1996 1997
and 2002.

III Class:- 857 858 862 863 874 876
883 885 891 892 893 895 912 913
916 918 919 920 921 922 923 924
925 926 927 936 938 939 948 953
960 964 965 968 1012 1013 1015 1017
1018 1036 1045 1046 1047 1048 1050 1052

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| 1054 | 1063 | 1064 | 1068 | 1071 | 1072 | 1074 | 1075 |
| 1076 | 1077 | 1079 | 1081 | 1084 | 1089 | 1090 | 1091 |
| 1123 | 1125 | 1126 | 1129 | 1133 | 1137 | 1147 | 1151 |
| 1161 | 1163 | 1164 | 1165 | 1166 | 1170 | 1171 | 1172 |
| 1173 | 1177 | 1178 | 1179 | 1180 | 1181 | 1182 | 1184 |
| 1185 | 1186 | 1188 | 1190 | 1192 | 1260 | 1262 | 1277 |
| 1278 | 1284 | 1296 | 1298 | 1300 | 1302 | 1305 | 1309 |
| 1310 | 1312 | 1315 | 1316 | 1317 | 1319 | 1321 | 1322 |
| 1326 | 1328 | 1330 | 1331 | 1332 | 1333 | 1334 | 1335 |
| 1338 | 1339 | 1340 | 1343 | 1402 | 1406 | 1437 | 1440 |
| 1442 | 1443 | 1444 | 1454 | 1462 | 1464 | 1468 | 1477 |
| 1478 | 1479 | 1520 | 1527 | 1528 | 1529 | 1530 | 1531 |
| 1533 | 1542 | 1543 | 1548 | 1549 | 1552 | 1554 | 1559 |
| 1560 | 1561 | 1562 | 1665 | 1568 | 1602 | 1603 | 1609 |
| 1643 | 1649 | 1650 | 1653 | 1656 | 1659 | 1661 | 1664 |
| 1665 | 1667 | 1669 | 1670 | 1672 | 1691 | 1692 | 1693 |
| 1694 | 1695 | 1699 | 1700 | 1704 | 1736 | 1747 | 1796 |
| 1798 | 1804 | 1810 | 1816 | 1818 | 1819 | 1821 | 1823 |
| 1824 | 1826 | 1828 | 1831 | 1860 | 1862 | 1886 | 1888 |
| 1950 | 1957 | 1958 | 1961 | 1962 | 1967 | 1968 | 1970 |

1971 1973 1975 1979 1982 and 1983.

## Abhigna

I Class:- 1094 1095 1097 1099 1197 1198

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| 1200 | 1201 | 1202 | 1271 | 1274 | 1291 | 1292 | 1499 | 1558 |
| 1604 | 1605 | 1606 | 1617 | 1619 | 1673 | 1677 | 1678 | 1679 |
| 1709 | 1722 | 1765 | 1838 | 1841 | 1842 | 1843 | 1845 | 1846 |
| 1847 | 1848 | 1868 | 1925 | 1926 | 1927 | 1928 | 1930 | 1931 |

1932 1933 and 1934.

II Class:- 866 868 886 890 901 954
981 994 995 1037 1098 1100 1101 1105 1119
1196 1203 1205 1207 1208 1211 1214 1268 1269
1272 1290 1354 1355 1401 1434 1435 1481 1485
1487 1501 1565 1674 1675 1721 1724 1729 1740
1753 1763 1764 1766 1767 1780 1799 1837 1840
1844 1849 1851 1852 1865 1867 1869 1870 1909
1910 1911 1913 1914 1920 1921 1924 1929 and
1980.

III Class:- 867 870 871 887 888 889
898 899 902 903 904 974 975 977 980
985 988 989 990 991 993 996 998 999
1021 1022 1023 1026 1028 1029 1096 1102 1103
1107 1154 1195 1204 1206 1209 1210 1212 1213
1216 1219 1220 1222 1270 1273 1280 1346 1347
1350 1352 1356 1357 1358 1360 1361 1362 1363
1365 1366 1368 1369 1371 1375 1376 1377 1378
1381 1385 1386 1389 1390 1391 1392 1394 1395
1397 1398 1399 1400 1420 1488 1489 1490 1491
1492 1493 1494 1495 1497 1498 1500 1569 1570
1571 1572 1573 1575 1576 1577 1578 1580 1581
1586 1587 1591 1622 1723 1739 1741 1750 1752
1756 1757 1777 1778 1779 1781 1805 1836 1850
1866 1871 1912 1915 1917 1919 1922 1923 and
2000.

## Vichakshana

I Class:- 1229 1230 1233 1234 1236 1240
1241 1505 1510 1632 1631 1687 1725 and 1935.

II Class:- 956 957 1002 1039 1040 1041 1042 1112 1142 1225 1227 1228 1231 1232 1235 1237 1238 1279 1281 1503 1507 1508 1512 1588 1625 1626 1627 1682 1684 1685 1686 1710 1711 1712 1761 1783 1787 1794 1873 and 1877.

III Class:- 955 1001 1010 1111 1224 1226 1239 1242 1243 1502 1504 1506 1521 1522 1628 1629 1630 1631 1730 1760 1762 1782 1784 1785 1786 1788 1789 1790 1791 1793 1874 1875 1876 1878 1879 1880 1881 1882 1883 1884 and 1885.

## Samartha

I Class:- Nil.
II Class:- 1282 1293 and 1513.
III Class:- 945 1005 1006 1634 and 1635.

Passed in I part only:- 1003 1244 1245 1246 1247 1248 1249 1250 1251 1252 1512 1593 and 1938.

Passed in II part only:- 905 1004 1253 1254 1255 1256 1257 1258 1939 1940 1941 1942 and 1943.

## Kovida

I Class:- Nil.
II Class:- 906 1525 and 1731.
III Class:- 1594 and 1595.

Passed in I part only:- 1987 only.
Passed in II part only:- 1638 only.

Passed in IV part only:- 1608 only,

Passed in V part only:- 129, 1295 1517 1624 and 1598.

Passed in I and II part only:- 1596 only

Passed in I, II, III and IV parts only:- 1515 only.

Passed in IV and V parts only:- 1516 only.

The following candidetes stood first in First Class, Prizes will be awarded to them in due course.

Parichaya:— 1422 S. Subrahmanya Sastry, Thulluru.

Abhigna:— 1619 V. Venkatakrishnan, Madurai A.

Vichakshana:— 1935 S. Durga Bai, Salem.



तंजावूरु - तिरुपति - त्यागरायनगर - सेलम केन्द्राणि विस्तृतान्यान् यत्र प्रत्येकमुपशतं विद्यार्थिनः समाविशन् ।

तिरुपति केन्द्रसंस्कृतविद्यापीठं कृतज्ञतांजलिना मानयामः यत्तत् विद्यार्थिनः छात्रभृतिप्रदानपूर्वकं प्रोत्साहयति । सर्वेभ्योपि उपाध्यायेभ्य संस्थाभ्यश्च कृतज्ञास्मो यैः संस्कृतसेवादृष्टचा केवलं विद्यार्थिनः पाठयन्ते उपस्थाप्यन्ते च एतत्सभापरीक्षासु ।

इति

संस्कृतभाषाप्रचारिणी सभा,
१५-५-७२.

श्रीनिवासाचार्यः,
परीक्षामन्त्री.

# विरोधिकृदुत्तरायणपरीक्षासु प्रचलितानि केंद्राणि—५५

१. अनन्तपुरम् २. अनकापल्ली ३. अमलापुरम् ४.आदोनी ५. आर्यवटं ६. इंद्रप्रस्थम् ७. कडप ८. कर्नूलु ९. काकिनाड १०. कोंडमाचुपल्ली ११. कोमरगिरिपट्टणभ् १२. कोयंबत्तूरु - ए. १३. कोयंबत्तूरु - बी. १४. गुंतकल् १५. गुंटूरु १६. गूडवल्ली १७. चित्तूरु १८. चिदंबरम् १९. चीमलवागुपल्ली २०. तंजावूरु २१. तिरुचिरापल्ली, २२. तिरुनेण्वेलि २३. तिरुवल्लिक्केणी २४. तिरुवेंगाडु २५. तिरुपति २६. तुलगाम् २७. तुल्लूरु २८. तेरिलंदूरु २९. त्यागरायनगर् ३०. दोम्मरनंद्याल ३१. निडमर्रु, ३२. निवगाम् ३३. नेल्लूरु ३४. पेदमक्केन ३५. पेद्दापुरम् ३६. भीमवरम् ३७. मंत्रालयः ३८. पदुरै - ए. ३९. मदुरै - बी. ४०. मन्नार्गुडि ४१. मुक्कामल ४२. मेट्टूरुडाम् ४३. मोडेकुर्रु ४४. यलमंचिलि ४५. राजमहेन्द्रवरम् ४६. वरंगल् ४७. वट्टिचेरुकूरु ४८. विजयनगरम् ४९. विल्लुपुरम् ५०. विशाखपट्टणम् ५१. शिवदेवुनिचिक्काला ५२. श्रीरंगम् ५३. सखिनेटिपल्ली ५४. सेलम् ५५. हैदराबाद् ।

---

# विरोधिकृदुत्तरायण परीक्षाफलसारिणी

उत्तीर्णाः ८३०

| परीक्षाः | अभ्यर्थिनः | उपस्थिताः | उत्तीर्णाः | | | |
|---|---|---|---|---|---|---|
| | | | प्र. श्रे. | द्वि. श्रे. | तृ. श्रे. | खंडशः |
| परिचयः | 633 | 560 | 108 | 119 | 212 | — |
| अभिज्ञः | 340 | 317 | 45 | 69 | 132 | — |
| विचक्षणः | 11 | 99 | 14 | 40 | 41 | — |
| समर्थः | 44 | 41 | — | 3 | 5 | 26 |
| कोविदः | 21 | 17 | — | 3 | 2 | 11 |
| आहत्य | 1148 | 1034 | 167 | 234 | 392 | 37 |

संस्कृतभाषाप्रचारिणी सभा, चित्तूरु.
१५–५–७२.

श्रीनिवासाचार्यः,
परीक्षामन्त्री.

# पाठकेषु विज्ञापनम्

गैर्वाणी नववर्षवयः अतीत्य जनवरि मासे दशमे वयसि पदं न्यधात्। इयं चैकवर्षपर्यन्तं त्रैमासिकी स्थित्वा द्वितीयवत्सरात् मासिकी प्रकाश्यते। द्वित्रसन्दर्भान् विहायैषा मासक्रममनपहाय बहिरायातीति सुविदितं भवताम्। अद्यतनकाले संस्कृतपत्रप्रकाशनं कीदृशक्लेशबहुलमिति सर्वविदितम्। तत्रापि एतत्पत्रस्य क्लेशा विलक्षणा अनुभूयन्ते। तेषां कीर्तनेन नात्र किमपि प्रयोजनम्। रचनादौर्लभ्यं रसिकवैरल्यं चेति खेदयति चेतः निर्वाहकाणाम्। विषयवैविध्येन सारल्येन वैचित्र्येण नूतन-रचनाभ्यासप्रदर्शनेन च सुतरां प्रशंसितमिदं पत्रं आर्थिकदौर्बल्येन व्यथते। मार्कि उपशतसंख्याका एव सदस्याः छंदं अर्पयन्ति, अवशिष्टा मूर्तयश्च निर्मूल्यमेव विभज्यन्ते वारं वारम्। केचन महानुभावाः विना याचनं प्रेषयन्ति स्वीयं छन्दं उचितकाले। परन्तु बहूनां न द्रवति हृदयं एकदापि। प्रेषव्ययबहुले काले, परिमित-परिवारवत्या अनया पत्रिकया प्रतिव्यक्ति विज्ञापनं असाध्यमिति हेतोः एवं विज्ञाप्यते यत् अनुपदं अथवा यावच्छीघ्रं, स्वीयं छन्दं (रू ४-००) प्रेषयित्वा पोषयन्त्विवति।

रूप्यचतुष्टयं यद्यपि भवतां उद्देशे अल्पमेव तथापि गैर्वाण्याः महते प्राणलाभाय संपद्येत। अन्यथा न केवलमिदं गैर्वाणी हासमेष्यति, अपितु स्वाश्रयभूतां संस्कृतभाषाप्रचारिणीं सभामपि ह्रसयिष्यति।

अतः पुनर्निवेद्यते पाठका स्वस्वमनसा संचिन्त्य यथाशीघ्रं छंदं अर्पयितु तर्पयितुं च गैर्वाणीम्।

इति,

ति. कं. तिरुवेङ्कटाचार्यः,

प्रधानमन्त्री.

आन्ध्रप्रदेशसर्वकारेणानुमोदिता R. C. No. 27-A 3/65 Dated 14-7-65.
R. N. 1845/60. Postal R. No. H. 493

भारतसर्वकारेण पुरस्कृता च

गैर्वाणी

वार्षिकम् ४-००

# प्रहेलिका

मंजुलघौ संभावितगुणे क्वचिन्नापदाधारे ।
अयि सखि तत्रोपपतौ मम चेतो न त्वनीदृशे पत्यौ ।।

अर्थः– अयि सखि, मंजौ सुन्दरे लघौ इष्टे च, संभावितसौन्दर्यादिगुणवति, क्वचित् कदाचिदपि, न आपदाधारे बिपत्तिरहिते, तस्मिन्, उपपतौ जारे, मम चेतः प्रवर्तते, अनीदृशे एतादृशलक्षणरहिते, पत्यौ भर्तरि, न प्रवर्तते । अयं प्रातीतिकोर्थः ।

मंजुला धिसंज्ञा यस्य तस्मिन्, संभावितः गुणः "घेर्डिति" इति गुणः यस्य तस्मिन्, नापदाधारे– "ना" इति पदस्य "आङो नास्त्रियाम्" इति सूत्रविहितस्य विषयभूते, उपपतौ उपपतिशब्दे, मम मनोस्ति, अनीदृशे घिसंज्ञागुणनादेशादिरहिते, पयौ केवल पतिशब्दे विषये, मम मनो नास्ति इति गूढार्थः ।।

Published by Sri N. Ramanatha Iyer B. A; B. L., Advocate
& Secretary S. B. P. Sabha, Chittoor (A. P.)
Printed by Sri T K Thiruvengadacharya
at Vijaya Press, Chittoor (A. P.) C 1500

वाणीं भजत गैर्वाणीम्

# गैर्वाणी

## मासिकी पत्रिका

संपुटः १० | 15 APRIL 1972 | क्रमांकः ४



विश्वसंस्कृतसम्मेलनस्य एकतमस्समावेशः

परीधावि वैशाखांकः] शकाब्दाः १८९४ [मूल्यम् ४० पैसे

# विषयसूचिका








# प्रपंचभाषाभूषा

प्रपंचभाषाभूषैषा
संस्कृत–
विपंचिका मृदुभावैषा ॥

सकलभुवनसुललितवेषा,
अकलुषवाणी निर्गतपोषा,
निखिललोकवाङ्मयपोषा,
नित्यसत्यविषयोत्तमकोषा ॥ ॥ प्रपंच ॥

मधुरमधुरमधुरसमधुरा,
कनककुधरभंजननिजगरिमा,
जलधिपरिधितुलितातिगभीरा,
विमलचंद्रिकाह्लादनसारा ॥ ॥ प्रपंच ॥

भूमंडलपरिततनिजरूपा,
कामितार्थकल्पद्रुमकल्पा,
कलितसुवर्णांचितनिजजल्पा,
कापि देहलीरंगाकल्पा ॥ ॥ प्रपंच ॥



# सम्पादकीयम्

## विहगावलोकनम्

देहलीमहानगरे सम्पन्नस्य अभूतपूर्वस्य विश्वसंस्कृतसम्मेलनस्य संदर्शनसंदर्भे आत्मानुभवः प्रदर्श्यते । सम्मेलनं मार्चमासीय २६ तिथितः ३१ पर्यन्तं महावैभवेन प्राचलत् । एतत्सम्मेलनसंविधाने जनवरीमासीयः कालः पाकभीकरसंघर्षकारणात् व्याक्षिप्तः । प्रशान्तवातावरणे मार्चमासान्ते संयोजितमासीत्सम्मेलम् ।

परन्तु कार्यकर्तॄणां कालव्यवधानमत्यल्पमासीत् । द्वितीयबुलिटेनः पिब्रवरिमासे प्रकाशितोपि न स संविभक्त आसीत् आवश्यकक्षेत्रेषु । तृतीयबुलिटनश्च मार्चमासादौ प्रकाशितः व्यग्रमेव संप्रेषितः तत्र तत्र । पत्रिकासु च दैनिकीषु विलम्बेन प्रकाशितं च सम्मेलन - कालादिकं । प्रतिनिधित्वेन परिवीक्षकत्वेन वा जिगमिषूणां आवेदनपत्रानयनायापि पर्याप्तोऽवकाशः नासीत् । तत्रापि तृतीयबुलिटने षष्टः परिच्छेदः उत्सुकानां मनांसि प्रव्यथयति स्म । तथापि संस्कृतप्रचारार्पितजीविताः तद्रसिकाः महोत्साहाः तनुधनमनस्संकटमविगणय्य प्रथमबुलिटेनात् आवेदनपत्रप्रतिकृतिं प्रकल्प्य शुल्कमार्पयन् । नैतावता तेषां क्लेशास्समवसिताः । कतिभिश्चिदेव प्रत्युत्तराणि

प्रमाणकानि च प्राप्तानि, न तु बहुलैः। तथापि मूढभक्त्या प्रातिष्टन् सर्वे देहलीम्। प्रथमं २७ दिनात् कार्यक्रमः प्रघुष्टः, ततः २६ दिनापराह्णत्, अन्ततश्च २६ दिनसंगवकालादेव सम्मेलननिर्वाहकैः। अनेनारंभविपर्ययपर्याकुलाः केचित् २५ दिने बहवश्च २६ दिने देहलीमापुः। पट्टिकाशकटनिस्स्थाने अवतरणमंचेषु न कोपि स्वच्छन्दसेवक आसीत् यः मार्गं दर्शयेत्।

निस्थाननिर्गमद्वारे तु चीटिकाग्राहकपार्श्वे कश्चिदासीत् परिचेत्ता यः प्रतिनिधीनां परिवीक्षकाणां आहूतानां च नामधामादिकं परिपृच्छति स्म। किं वक्तव्यं आगतानां संकटानि? तदीयट्टिकायां बहूनां नामानि नैवासन्, बहवश्च आगन्तुकाः स्वीयद्रव्यादेशप्रमाणकं न सहानयन्, सभ्यतासंख्या च तैर्बहुभिरप्राप्तैव। बहुदिनप्रयाणक्लिष्टानां जनानां अतिक्लेशकर्यैवासीत् एषा विचारणा।

अन्ततः बहुवारपरिशीलने अपि पट्टिकाया विफलः सहृदयः स अतिथेयः तत्तन्नामादिकं लेखयित्वा बहिरनयत्। अतिथयश्च तत्तच्छकटेषु अधिरेपिताः संस्कृतनगरं, विविधा अट्टशालाश्च प्रापिताः। आकाशायाताश्च विदेशीयाः स्वदेशीयाश्च तत्तद्योग्यस्थलेषु अवतारिताः। राजधाटस्य पार्श्वतः ग्रामोद्योगसंघभवनयुते विशालप्रदेशे संस्कृतनगरं निर्मितमभूत् यत्र द्वित्र पर्लांगदूरं यावत् निर्मितानि पटकुटीराणि विद्युद्दीपदीप्त्या देदीप्यमानानि वीथीभिरराजन्त। तत्र च महाविशालानि त्रिचतुराणि भवनानि ततः पूर्वमेवासन् यत्र च प्रत्येकं शतशोऽतिथयस्समावेशिताः। प्रतिव्यक्ति एकैको मञ्चः वितीर्णः। स्नानपानाद्यर्थं च जलसमृद्धिरासीत् प्रशान्तवातावरणेन च सन्ध्याद्यनुष्ठानस्य च सौकर्यं आवर्तत। प्रातः षड्घंटावादनतः सार्धाष्टघंटापर्यन्तं लघ्वाहारेण सह चाहोऽदीयत। तत-

स्सन्नद्धेषु तैलशकटेषु संस्कृतनगरादट्टशालाभ्यश्च अतिथय आनीयन्त सुखं विज्ञानभवनप्रांगणम् । २६ सायं च कर्तव्यस्य प्रातरेवावसितत्वात् विज्ञानभवने न कोपि कार्यक्रम इति, अतिथीनां प्रमाणीकरणमपि न तत्रेति, संस्कृतनगरे एव श्वः (२७ दिने प्रातः) भविष्यतीति प्रथा प्रचारिता येन बहव आगन्तुकाः श्रमालसाः अत्रैव अतिष्ठन् येन सभ्यलभ्यानि दैनंदिनीप्रभृतीनि सावरकाणि महार्घाणि पुस्तकानि च दुर्लभान्यासन् ।

अश्रूयत आप्तमुखात् निर्वाहकाभ्यूहितसंख्यामप्यतीत्य समागतत्वात् सभ्यानां देयसामग्री अन्ततः सभ्यतासूचकचिह्नानि च शून्यप्रायाण्येवासन् । तत्सम्पादनार्थं सभ्यतानां कल्लोलः केवलमशिष्यत एकद्वदिनं । सम्मेलनान्ते च द्वित्रदिनानि प्रयाणव्ययांशग्रहणकलकलोऽवर्तत । प्रातस्सायं मध्याह्ने च प्रतिदिनं चाहभोजनग्रहणसंरंभो महानासीत् यदपरिचिता दाक्षिणात्याः मृत्पात्राणां पानीयान्नचपाती - चोष्यदालतक्रादीनां स्वयंग्रहणस्पर्धायां पश्चात्पदाः कालातीतभिक्षुकास्समजायन्त । वेदवेदान्तशास्त्रविस्तरपटूनामपि समेषां पंडितानां मण्डली आहिण्डत कबलं गलबिलाधस्संयोजतुमसमर्था । यत्सत्यं कल्याणगृहद्वारमासीत् स्मृतिपथमारूढम् । हैदराबादहौसीय - तृतीयदिनप्रीतिभोजस्तु आप्याययति स्म सकलान् यतस्तत्र पत्रपुटेषु नवशरावेषु नवस्थालीषु च मृष्टमिष्टान्नं क्रमशः परिविष्टं अभूत् ।

प्रतिदिनं विज्ञानभवने ८-३० घण्टातः १२-३० पर्यन्तं जी. सि. डि. इ. अपवरकेषु महासभास्थले जातीयप्रदर्शनालये च प्रायः तत्तद्विषय - विमर्शात्मकपत्राणां पठनं, शास्त्रचर्चाः च प्रावर्तन्त । तृतीयभूमिकायां च विविधसंस्कृतपुस्तकानां प्रदर्शनमास्थाप्यत । तत्रैव भवने अतिथीनां अल्पाहारस्वीकार - प्रबन्धश्च संयोजितः । (शिष्टं ३० पृष्टे

# पदार्थविज्ञानसारः

[पूर्वानुबन्धः]

## अथ त्रयोदशकथोपकथनं आकरजातवस्तुविषयकम्

गुरुः— संप्रति वयं वस्तुविवेकचरमभाग मर्थादाकरजातवस्तुवर्गं विवेचयामः ।

शिष्यः— यथा प्राणिनो वृक्षाश्च जातिवर्गादिभिर्विभक्तास्सन्ति, तथा खनिसंभूतानि वस्तूनि किं विभक्तानि सन्ति?

गुरुः— सन्ति । चतसृभिर्जातिभिराकरजानि वस्तूनि विभक्तानि, यथा प्रस्तरो लवणं ज्वलनीयवस्तु धातुरित्येतच्चतसृणां जातीनां मध्ये वरो गणः प्रकारश्च विद्यते ।

शिष्यः— प्रस्तरस्य कति वर्गास्सन्ति?

गुरुः— तस्य द्वौ वर्गौ स्तः, आद्यो मृण्मयो द्वितीयो लवणमयः ।

शिष्यः— सर्वे मृण्मयप्रस्तराः किमेकविधास्सन्ति?

गुरुः—नहि, तेपि द्विविधास्सन्ति । आद्यास्तु यैरेव काचकर्तनं भवति, द्वतीया यैरेव तन्न भवति ।

शिष्यः— प्रथमप्रकारमध्ये कस्तावत्प्रधानः प्रस्तरः?

गुरुः— एतत्प्रकारमध्ये मणिरत्नादिकं गणितं भवति । तानि च हीरकपद्मरागपीताश्ममरकतनीलकान्तयामून्याप्रस्तरस्फाटिकादीनि वेदितव्यानि ।

शिष्यः– एतेषां मध्ये बहुमूल्यं किमस्ति?

गुरुः– एतेषां प्रभापरिमाणयोरनुसारेण मूल्याधिक्यं भवति। परन्तु सर्वापेक्षया हीरकं बहुमूल्यं भवति।

शिष्यः– हीरकं कियन्मूल्यं भवति ?

गुरुः– परिमाणविशेषेण हीरकस्य मूल्यं निर्णीतं भवति। अतः कस्यचिद्धीरकस्य मूल्यं मुद्राशतं, कस्यचिद्वा शतत्रयं, कस्यचिद्धिदुरस्य मुद्रासहस्रं मूल्यं भवतीत्यादिकं वेदितव्यं। अवधीयतां चेन्नपुरीतः इन्ग्लण्ड् देशे एकमहाढचसमीपे हीरकमेकं पञ्चत्रिंशत्ससहस्राधिकलक्षमुद्राभिर्विक्रीतमभूत्। एवं दक्षिणामेरिकाख्यदेशे हीरकमेकं प्राप्तमभूत्, यस्य मूल्यमष्टशताधिकचतुश्चत्वारिंशत्सहस्रोत्तरषड्लक्षोत्तर– पञ्चनियुतं निर्णीतमभूत्। हीरकाणां मध्ये यद्धि हीरकं स्फाटिकवत् हिमानीवद्वा शुभ्रतरं भवति तत्तु सर्वापेक्षया बहुमूल्यं वेदितव्यं।

शिष्यः– मणिरत्नमेतत्सर्वं कस्मिन् स्थाने प्राप्तं भवति?

गुरुः– आकरे पर्वतविशेषे नदीविशेषवालुकाभ्यन्तरे च रत्नादिः प्राप्यते।

शिष्यः– मणिरत्नादिभिन्नः कश्चिदपरः प्रस्तरोऽस्मिन् वर्गे किं नास्ति? येनास्माकं महत्प्रयोजनमस्ति?

गुरुः– अस्त्यैवैतद्वर्गाभ्यन्तरे वह्निप्रस्तरवालुकादिर्गणितो भवति। एतदुभयेन काच– स्वच्छकाचादर्शादिकं निर्मितं स्यात्।

शिष्यः– ये प्रस्तरा हि रेखया स्वच्छकाचं न च्छिन्दन्ति, तन्मध्ये के के गणिता भवन्ति?

गुरुः– एतेषाम्मध्ये सर्वा मृत्तिका गणितास्सन्ति । याभिरस्माकमिष्टका मृदुघटादिपात्रं निर्मितं भवति ।

शिष्यः– मयैतच्छ्रुतं, सर्वा मृत्तिका उपर्युपरिभावेन पृथक्पृथक्तिष्ठन्ति । तत्किं सत्यं?

गुरुः– प्रथमे उर्वरा कृष्णवर्णा मृत्तिका तिष्ठति, यस्यां धान्यादि सस्यं वृक्षादिश्च जायते । तदधः कर्दमाकृतिः स्थूलमृत्तिका तिष्ठति, यया चेष्टकादिस्संभवति । तदधो नानाकर्करमयी मृत्तिका तिष्ठति, ययाऽस्माकमनेकप्रयोजनमस्ति । तदधश्च चूर्णमयी मृत्तिका । एषा च मृत्तिका रत्नाद्याकरसमीपे नानास्थाने तिष्ठति । तदधोभागेंगारमयी बह्वी मृत्तिका । सा हि हिमानीदेशे वह्निरक्षार्थं महाप्रयोजनार्हा । एतदुपर्युपरिभावेनावस्थानं सर्वदैकविधं नो तिष्ठति । किंतु प्रागुक्तवाक्येन तासामवस्थितेरनुक्रमो वेदितव्यः ।

शिष्यः– एतद्वर्गाभ्यन्तरे कश्चिदाश्चर्यप्रस्तरोस्ति किं?

गुरुः– आम्, अस्त्यैकः प्रस्तरः, यस्य नामधेयमदाह्यप्रस्तरः, अर्थात् हुताशने निक्षिप्तस्सन् ज्वलति, न पुनर्दग्धो भवति ।

शिष्यः– लवणमयवर्गाभ्यन्तरे के के प्रस्तरास्सन्ति?

गुरुः– एतद्वर्गाभ्यन्तरे ग्रावजचूर्णं कठिनी श्वेतपाषाणो गृहादिनिर्माणयोग्यपाषाणादयो नानाविधास्सन्ति ।

शिष्यः– ग्रावजचूर्णेन किं प्रयोजनमस्ति?

गुरुः–महत्यशेषकर्मणि तल्लगति । पश्य, प्रासादाट्टालिकादिनिर्माणे निबद्धपङ्कविशेषो लेपविशेषश्च भवति । तदुभयमेवं चिरस्थायि भवति । प्रासादादौ प्रलिप्तं सत्प्रायो द्विसहस्राब्दपर्यन्तं पाषाणवत्कठिनं भूत्वा तिष्ठति । एतच्चूर्णं कृषिकर्मोपयोगि

भवति, यतः क्षेत्राभ्यन्तरे निःक्षिप्ते सति दुष्टकीटाः प्रणश्यन्ति। एवं जलधारणशक्तिं दत्त्वा तां च भूमिमुर्वरां करोति। एवं सितानिर्मलीकरणे सावनाख्यवस्तु– विधाने लोहद्रवीकरणे च। एवमपरकार्येपि तस्यावश्यकत्वं विद्यते।

शिष्यः– कठिन्या किं कर्म भवति?

गुरुः–या कठिनी महाकठिना सा च गृहादिनिर्मितौ पाषाणो भवति। एवं तया निबद्धपङ्कविशेषो जायते। लण्डनाख्यनगरे प्रायः सर्वा अट्टालिकाः तद्ग्रन्थनपङ्केन निर्मिता भवन्ति। ग्रावजचूर्णवदेषा कठिनी कृषिकर्मोपयोगिनी भवति। शिल्पिनश्च तया कठिन्या अवयबयन्त्रं निर्माय धातुद्रव्यं गालयित्वा तत्र निक्षिप्य प्रतिमूर्तिं विदधति। तक्षाणश्च गटनकाष्ठेषु तया च रेखां ददति। एवं भावनाख्यौषधेषु एतस्या भावना महौषधम्।

शिष्यः– श्वेतप्रस्तरेण किं कार्यं भवति?

गुरुः– स चास्ति नानाविधः, येनाट्टालिकादिशोभां कुर्वंति, कुर्वंति च प्रतिमूर्तिनिर्माणं येन। एवं प्रासादादिमध्यप्रदेशं तैरपि निबद्धं करोति। कश्चित् श्वेतप्रस्तरो दग्दोभूत्वा कठिनीवत्कृषिकर्मोपयोगी भवति।

शिष्यः– हे गुरो, त्वया प्राग्यदुक्तं तन्मया बुद्धं, यत् द्वितीयजातिप्रस्तरो लवणमय इति। एतस्यां जातौ कति वर्गास्सन्ति?

गुरुः–एतस्यां द्वौ वर्गौ। एको मृत्तिकामयं लवणं, द्वितीयो धातुमयं लवणं।

शिष्यः– प्रथमवर्गाभ्यन्तरे कति विधानि लवणानि सन्ति?

गुरुः– स्फटिकार्याख्यलवणविशेषमर्थात् फट्किरीति प्रसिद्धमेकं, द्वितीयं पांसुलवणं, तृतीयं विड्लवणं, चतुर्थं यवक्षाराभिधलवणं शोरेति प्रसिद्धमित्यादि।


(सशेषम्)

# श्रीपारिजातापहरणकाव्यम्

ले० श्री न. च. वेंकटताताचार्यः, विशाखपट्टणम्.

(पूर्वानुबन्धः)

भुक्त्वा निजात्मजसहोदरमौनियुक्तः
प्रक्षाल्य गन्धसलिलेन करौ मुरारिः ।
ताम्बूलसेवनमथाचरदेष बन्धु-
मित्रैस्ततो मुनिवरं नतवान् स्वसख्या ॥

आशास्त सत्यां मुनिरेष हृष्टो
ह्यशेषलोकैरभिनन्द्यमाना ।
लज्जां सपत्नीषु गतासु भूयः
भव प्रिया भर्तुरजस्रमेव ॥

युद्धाय गच्छेत् किमु ते प्रियोऽयम्
त्यक्त्वा गृहे त्वां तरुणीमतल्लि ।
प्राणाधिकां ते बहुमन्यतेऽसौ
अन्या न चास्ते खलु ते समाना ॥

सदा भवेदेव पतिस्त्वदीयः मनोरथानां परिपूरकः सः ।
सुदुष्करं कार्यमपि क्षणेन ममाशिषां शक्तिवशात् करोतु ॥

एवं समाख्याय हरिं विलोक्य जगाद मौनी गमनोन्मुखस्सन् ।
गच्छाम्महं मां न हि विस्मर त्वं; ततो बभाषे हरिरेनमेवम् ॥

प्रतार्य बृन्दारकमातरं तां जहार कर्णाभरणं दुरात्मा ।
सुतः पृथिव्याः नरकाभिधानः निहत्य जन्ये तदहं प्रपन्नः ॥

कुतो न सा मां अधुनाप्यपृच्छत्
किमस्म्यहं दूरजनो नु तस्याः ।
समेत्य नाकं तरसा प्रदास्ये
इत्येव तां त्वं कृपयाऽभिधत्स्व ।।

संप्रेष्य तं मुनिवरं विनयेन शौरिः
सत्यावधूसहित एव पणे प्रवृत्तः ।
आदित्यबिम्बमथ पश्चिमदिक्तटेऽभूत्
शोणं च यादवसतीमदिराक्षितुल्यम् ।।

अस्तंगतिं दिनकरस्य विलोक्य सद्यः
ध्वान्तप्रचोदितदिनास्तसमाख्ययोधः ।
तत्प्रेयसीं द्रुतमितः परिकर्षतीति
जोघुष्यमाणमिव पक्षिरुतं ततान ।।

विलोकितुं सूर्यमशक्तमेकं रथाङ्गयुग्मं सलिले विलोक्य ।
भृशं विषीदत् जलदेवतायाः निमीलयन्नेत्रमिवास्त पद्मम् ।।
क्रमेण सर्वत्र तमस्ततान मनोरथश्चाप्यभिसारिकाणाम् ।
अवाप्य साफल्यमनन्यलभ्यम् ततश्च ताः तुष्टुवुरात्मयोनिम् ।।

सात्राजितीसहित एव महार्घशय्या-
संयुक्तहेममयमञ्चतले शयित्वा ।
प्रातर्व्यबुध्यत हरिः प्रतिबोध्यमानः
वैतालिकश्रुतिशतैः मृदुगीतयुक्तैः ।।

नाकं प्रयातुमथ शौरिरमंस्त तार्क्ष्यं
सत्यावधूसहित एव नितान्तहर्षात् ।
सद्यः समेत्य गरुडः स्थित एव तस्य
पार्श्वे नितान्तविनयेन कृतप्रणामः ।।

शौरिर्जगाद गरुडं क्रमशो मुनीन्द्र-
दिव्यागमं कुसुमदानकथाद्यशेषम् ।
सात्राजितीप्रणयकोपनिवारणाय
स्वीयप्रयाणविषयं च सुरालयस्य ।।

तदा प्रहृष्टो गरुडो बभाषे विधातुमिच्छामि रिपोरिदानीम् ।
प्रतिक्रियामद्य भवत्प्रसादात् पुरा मदीयैकगरुत्प्रहर्तृः ।।

आसीस्त्वं अर्हः खलु तत्क्रियायाः
इत्येवमुक्त्वा गरुडं मुरारिः ।
आरूढवान् तं वनितासमेतः
रक्षां विधाय स्वपुरस्य सम्यक् ।।

आरोहणानुपदमेव तयोः खगेशः
उड्डीयते स्म गगनेऽभिमरुत्वदाशाम् ।
तत्पक्षजातमरुता सकलाभ्रबृन्दम्
तूलं यथा सुबहुदूरं अगात् क्षणेन ।।

पञ्चायुधी च हरिपार्श्वयुगे तदानीम्
आगन्तुमारभत ताक्ष्र्यवरेण साकम् ।
तत्पक्षजातमरुता परिपूर्णशङ्खः
धुंधुंरवेण बहुधा ध्वनितो बभूव ।।

भृशं विरेजुर्जलबिन्दवोऽपि विमुच्यमाना जलदैस्तदानीम् ।
शिरोजजाले हरिवल्लभायाः वितीर्णमुक्तातति‍वत् द्युलक्ष्म्या ।।

जीमूतजालं अतिमात्रं मनोज्ञमासीत्
चंपालतासमुदयेन समन्वितं सत् ।

सौवर्णदण्डसहितं रुचिरातपत्रम्
नीलं यथा नयनमोदविधानदक्षम् ।।

श्रीकृष्णदेहसमुदंचितनीलकान्ति-
पूरस्तदा गगनसीम्नि रराज बाढम् ।
सूर्यात्मजा गगनमुत्पततीव शीघ्रम्
तातं विलोकितुमना इव कौतुकेन ।।

खगेशपक्षानिलदुस्सहत्वात् पृथाकुरज्जुप्रकरो निलीनः ।
अपेतरक्षान् अरुणस्तदानीं शताङ्गबद्धानकरोत् जवेन ।।

ननाम ताक्ष्यो निजमग्रजं तम् जवेन गच्छन् स च सोदरं तम् ।
भृशं समाशास्त हरिश्च सत्या शशंसतुः कौशलमेतयोस्तत् ।।

आकाशमार्गे प्रचलन् सुदूरम् आरूढपक्षीन्द्ररथस्तदानीम् ।
कान्तामवोचत् हरिरादरेण माध्वीकमाधुर्यमुचैव वाचा ।।

कान्ते! विलोकय सुरम्यमिमं सुमेरुम्
यो वर्तते प्रतिकृतिर्विनतासुतस्य ।
सौवर्णकान्तिकवचीकृतरम्यपक्षः
वज्रायुधप्रहृतिमान् शशिसेव्यमानः ।।

व्याधाङ्गनाः चन्द्रगतं कुरङ्गम् संपीडय बाणैः नमृतं तमेव ।
पीयूषसेकात् सुखिनं विलोक्य शस्त्राण्यमुञ्चन् किल लज्जयाऽत्र ।।

किं पश्यसि त्वं ललने लताङ्गीः
गिरेरमुष्योन्नतशृङ्गभूमौ ।
गायन्ति याः गीतवरैस्सुरेशम्
मनोज्ञवीणारवतुल्यकण्ठैः ।।

(अनुवर्तते)

# लोहमार्गीय-अपघातानां निवारणार्थे उपायाः

वारं वारं लोहमार्गे (पट्टिकामार्गे) अपघातानां वृत्तानि समाचारपत्रेषु प्रकाश्यन्ते । भूरि जीवित-वित्त-हानिः च जायते तैः । कदाचित् यान-संचालकः अग्रे स्थितं यानं न पश्यति, कदाचित् पट्टिका-संयोजकस्य आलस्य-दोषेण विरुद्धदिग्भ्यां आगच्छन्तौ शकटौ एके एव मार्गे परस्परं आधातं कुरुतः, अथ वा सुधारार्थे विश्रामं कुर्वाणस्य शकटस्योपरि अन्यः शकटः संघर्षणं करोति, कदाचित् वर्षाकाले पट्टिकाः विस्थापिताः भवन्ति । कदाचित् चौरैः घातकाङ्क्षिभिः आधार-पट्टिकाः कीलाः वा उत्पाटयन्ते, अथ वा मार्गोपरि वृक्षपाषाणादयः स्थाप्यन्ते । सर्वेषु अपि प्रसङ्गेषु संचालकाः दूरत एव आक्रमितव्यं मार्गं द्रष्टुं न शक्नुवन्ति इत्येष महान् दोषो वा, दर्शनस्य अभावः वा कारणं भवति । तत्र च मनुजस्य दृष्टेः दूरदर्शनक्षमतायाः न्यूनता एव कारणं । तथैव लोहमार्ग-संरक्षण-दलस्य परिवीक्षणस्य अभावेन अपि घातिनः चौराः वा कार्यघातं कर्तुं प्रभवन्ति ।

यदि शकटसंचालकाः संचालनवेलायां दूरवीक्षणसाधित्रैः सज्जाः भवेयुः तर्हि ते दूरत एव अग्रे स्वमार्गे स्थिताः बाधाः दृष्ट्वा स्वीय-यानानां गतीः संयन्तुं शक्ष्यन्ति, जन-धन-हानिञ्च रोद्धुं न्यूनीकर्तुं वा शक्ष्यंति । महता जवेन गच्छतां 'फ्रांटियर मेल' 'एक्सप्रेस' सदृशानां शकटानां वा उपरि दूरवीक्षणेन सह, यदि आवश्यकं दूरदर्शन-बिंबिका (टेलेव्हिजन-केमेरा) तथा

दर्शन-पटाः च चालककक्षेषु स्थापयितव्याः ।

लोहमार्ग-संरक्षक - दले एकं 'पुष्पक-दलं' अपि स्थापयितव्यं । तैः आरक्षिभिः पुष्पकेषु आरुह्य समये समये यथाविभागं रात्रिं-दिवं मार्गस्य निरीक्षणं कर्तव्यं । तेन यदि मार्गः जलभग्नः, यदि वा मार्गे दुष्टाः घातोपायान् कुर्युः तर्हि झटिति समीपे निस्स्थाने सूचनां प्रेषयितुं वा चौरान् उपरितः एव गोलि-चालनेन विद्रावयितुं, व्रणयित्वा बद्धुं, धर्षितुं वा सुशकं भवेत् । एतेषां उपायानां संचालने यः व्ययः भवेत् सः मानवजीवितस्य संरक्षणस्य दृष्ट्या न गण्यः एव ।

★

न्ययामाला — १८.

# अजागलस्तनन्यायः

"अवरः"

ब्रह्मणः सृष्टौ बहवः पदार्था-स्तादृशास्सन्ति ये पुनस्सन्तोऽपि असत्प्रायाः प्रतीयन्ते । अर्थात् सतामपि तेषां तत्त्वं अवास्तवं निरर्थकं चेति भावः । तादृशानां पदार्थानां अग्रेसरोऽयं अजागल-स्तनपदार्थः । अत एव एतन्या-येन सर्वेष्वपि व्यर्थपदार्थेषु प्रसंगः संगच्छते ।

अजायाः गले यः स्तनसदृशः अवयवविशेषः लम्बते न ततः क्षीरं अपेक्षितुं युक्तम् । यद्यपि क्षीरस्य स्तनप्रभवत्वान् स्तन्य-मित्यप्यस्ति नामान्तरं प्रथा च, तथाऽपि अजागलस्तनात् न क्षीरं क्षरति । स्तन्ये प्रवृत्तः अजागले तदलभमानः अजा-गलीयं स्तनं व्यर्थं ख्यापयति । अपि च सर्वेष्वपि व्यर्थपदार्थेषु अजागलस्तनपदं प्रयुञ्जते ।

यः कार्यकारी न भवेत्
फलेग्रहिरपीति च
अजागलस्तनस्सोऽयं
इति लोके प्रतीयते ॥

★

# व्रतिनो युवानः

लेखकः - वैद्यः श्रीरामस्वरूपशास्त्री, संपादकः, बालसंस्कृतम्, बम्बई ८६.

विचेतुमिच्छन्ति सदैव पुण्यान् गुणानपुण्यान् परिवर्जयन्ति ।
चरीतुमिच्छन्ति सतां चरित्रं विद्यार्थिवृत्ता व्रतिनो युवानः ।।
अधीतुमिच्छति सदा सुविद्या गुरुन् भजन्तो विनयेन नित्यम् ।
पुष्णन्ति वृद्धेषु चिराय श्रद्धां विद्यार्थिवृत्ता व्रतिनो युवानः ।।
परस्परेष्वादरमादधानाः सन्मित्रवर्गेषु च विश्वसन्तः ।
भूतेषु मैत्रीं च समादधाना विद्यार्थिवृत्ता व्रतिनो युवानः ।।
परोपकाराय कृतप्रयाणा जनोपतापं च निवारयन्तः ।
कार्याणि पुण्यानि मुहुश्चरन्तो विद्यार्थिवृत्ता व्रतिनो युवानः ।।
प्रीणन्ति लोकान् चरितैः स्वकीयैरावर्जयन्तश्च रिपूनपि स्वान् ।
विज्ञानबोधेन परिक्रमन्तो विद्यार्थिवृत्ता व्रतिनो युबानः ।।
स्वध्यायवेलासु च जागरुकाः काले प्रबुद्धा अधियन्ति शास्त्रम् ।
विद्वच्चरित्राणि समाचरन्तो विद्यार्थिवृत्ता व्रतिनो युवानः ।।
मातुर्मुदं जन्मभुवश्च गर्वं पितुर्यशो दिक्षु पुरो नयन्तः ।
विद्यागुरुणां च कृपां स्तुवन्तो विद्यार्थिवृत्ता व्रतिनो युवानः ।।
ते ब्रह्मचर्यं नियमैर्यमैश्च सदा चरन्तः सुचिरं प्रसन्नाः ।
स्वसंस्कृतिं संस्कृतमेव वाचं समाश्रयन्ते व्रतिनो युवानः ।।
चित्रालयं ते न तु यान्ति नित्यं यत्रापि कुत्रापि न यान्ति यैः कैः ।
त्वंकारयुक्तां न वदन्ति वाचं विद्यार्थिवृत्ता व्रतिनो युवानः ।।
वेषं स्वकीयं न परित्यजन्ति भाषां स्वकीयां न परित्यजन्ति ।
रीतिं प्रतीतिं च समाचरन्तो विद्यार्थिवृत्ता व्रतिनो युवानः ।।
देवालयं यान्ति नमन्ति देवान् पूजन्ति धेनूः बुधवर्यलोकम् ।
मानं प्रभूतं ददतेऽवरेभ्यो विद्यार्थिवृत्ता व्रतिनो युवानः ।।
कामान् यमित्वा दमयन्ति लोभं क्रोधं च कर्षन्ति मनो नियम्य ।
मुञ्चन्ति शङ्कां च भयं च काले विद्यार्थिवृत्ता व्रतिनो युवानः ।।

# विजयतेऽस्मद्देशमंत्र्यग्रणीः

रचयिता— श्री के. सि. जयचन्द्रशास्त्री

याह्याखानदुरन्तदारुणमहाहिंसाक्रियाबाधितान्
हिन्दूदेशमुपागतान् सुबहुळान् बंग्लाधरित्रीजनान् ।
रक्षन्ती वसनान्नदानविधिभि; नित्योत्सुका सांप्रतं
नेह्‌रूवंशमहामणिर्विजयतेऽस्मद्देशमंत्र्यग्रणीः ॥

पाकिस्थानवरूधिनीसमुदितं, निस्सीममत्याहितं
बंग्लादेशजनस्य; नीतिनिपुणं निष्कासयित्वा क्षणात् ।
धीरैर्भारतसैनिकैर्निरुपमैः, संरक्ष्य देशं च तं
कीर्तिं प्राप जयेन्दिरेति भुवनेऽस्मद्देशमंत्र्यग्रणीः ॥

सामान्यामबलां तु केचन महामूढाः प्रजल्पन्त्विमां
जह्वर्लालमहोदयस्य तनुजामिन्दुप्रभामिन्दिराम् ।
किं नः छिन्नमखण्डकीर्तिविभवा शक्त्याकृतिस्साऽधुना
पाकारित्वमवाप्य राजति मुदाऽस्मद्देशमंत्र्यग्रणीः ॥

निक्सन्कुत्सितराजनीतिमखिलां ज्ञात्वा सुसूक्ष्मेक्षया
निस्तन्द्रं च प्रचोद्य सैन्यमतुलं कालानुगुण्येन, या ।
बंग्लामोचनमाचचार; करुणापाथोनिधिस्सेन्दिरा–
गान्धिर्भारतरत्नमेव भवताद्देशस्य मंत्र्यग्रणीः ॥

जातिर्यातु महोन्नतिं, कविबुधालापस्तु संवर्धतां
सन्तूद्योगिजनाः स्वकीयकरणीयेष्वप्रमत्ता नयैः ।
दारिद्र्यं च विनाशमेतु, जनताकौतूहलायेन्दिरा–
देव्याः पालनमत्र भारतभुवि स्थेयस्समुज्जृम्भताम् ॥



# गैर्वाणीस्तुतिरत्नमाला

ले० श्री एस. त्रि. एस. पाट्टाचार्यः.

संस्कृतं नाम दैवी वाक् इत्याख्याता महर्षिभिः ।
नमस्तेभ्यो विपश्चिद्भ्यः गैर्वाण्यै च नमो नमः ॥

ये संस्कृतप्रियाः सन्तः तेषां सद्मनि सद्मनि ।
सदा सुभाषा गैर्वाणी विहर्तुमियमिच्छति ॥

भास्करः सर्वदा भाति चन्द्रमाः तत्करैस्तथा ।
गैर्वाणी भ्राजते, तद्वत् द्राविडी तदलंकृता ॥

माधुर्यं न मधौ देवि तव वाक्यपदेष्वपि ।
यन्माधुर्यरसास्वादात् नरो मधुरवाग्भवेत् ॥

मधु तृप्ति रसज्ञायाः केवलं तनुतेऽल्पशः ।
त्वं तु तृप्ति यावदायुः करोषि मनसः सदा ॥

यस्याः प्रभावमधिगन्तुमशक्नुवन्तः
विप्राः सदा स्वमरवाचमनूच्चरन्ति ।
अभ्युन्नमन्ति मनसा वचसा च मूर्ध्ना
तां संस्कृतीमभिनमामि शुभां विचित्राम् ॥

यस्या वपुः कचटपादि विचित्ररूपं,
नानाविधार्थकमपि प्रणवस्वरूपम् ।
यस्याक्षरैः कलितमस्त्रमपि प्रयुक्तं
दुष्टांश्च हन्ति महिमा तव देवि को नु! ॥

5

श्रीं बीज मभ्यस्यति यो विपश्चित् स श्रीनिवासस्य दयैकपात्रः ।
तदक्षरं देवि तव स्वरूपं तस्मात् सदा त्वां प्रणमामि नित्यम् ।।

चित्तूर् पुरीं देवि शुभाश्रयां त्वं करोषि नित्यं सकलार्थसिद्धाम् ।
श्रीरङ्गमागत्य कथं न कुर्याः अस्मादृशान् वाङ्महिमाभियुक्तान् ।।

वाल्मीकिवक्त्रगलितां रसपद्मरूपां
सर्वैस्सदा परिचितां श्रितकल्पवल्लीम् ।
काले तथा परिणताममराधिवाणीं
गैर्वाणि! पत्रनिलयां सततं स्मरामि ।।

नानार्थयुक्ता शुभदा सुवाणी देवी सरोजासनधर्मपत्नी ।
आज्ञापनात् पंकजविष्टरस्य गैर्वाणि! पत्रं निलयं गता नु ।।

क्षोणीं वाणीं च गैर्वाणीं विलासयसि पत्रिकाम् ।
अमरा शुभदा वाणी गैर्वाणी रक्ष मां सदा ।।

गैर्वाणी पत्रिका शिष्टा सदा जयतु भूतले ।
यस्याः स्मरणमात्रेण निस्सरन्ति वचांसि नः ।
दासेन पाट्टरार्येण ततदासेन निर्मिता ।
गैर्वाणीस्तुतिरत्नानां माला विजयतां भुवि ।।

## मनोरंजनम्

**एकः**– तव सम्मतिं कस्यै दास्यसि?
**अपरः**– यस्तु सुदृढं अनर्गलं च पीठ मास्फल्योपन्यस्यति तस्मै ।

★ ★ ★

**वाक्कीलः**– वादिनः तव च कस्संबन्धः ?
**साक्षी**– स्वग्राहकमयमग्राह्यत्वसंबन्धः ।

# सुभाषितानि

ले० श्री यन्. रामनाथार्यः

आलस्यं हि मनुष्याणां शरीरस्थो महारिपुः ।
नास्त्युद्यमसमो बन्धुः कृत्वा यं नावसीदति ॥ ४४४ ॥

Procrastination is the greatest inborn enemy of everyone; there is no friend equal to resolute action, with the aid of which everyone prospers.

यथा धेनुसहस्रेषु वत्सो विन्दति मातरम् ।
तथा पूर्वकृतं कर्म कर्तारमनुगच्छति ॥ ॥ ४४५ ॥

Just as the calf spots out its mother in the midst of thousands of cows, the results of past Karma, spot out and follow every person

स्वायत्तमेकान्तगुणं विधात्रा विनिर्मितं छादनमज्ञतायाः ।
विशेषतस्सर्वविदां समाजे विभूषणं मौनमपण्डितानाम् ॥ ४४६ ॥

God has endowed unwise persons with the quality of silence, to coverup their ignorance. Silence is a great ornament to an ignorant person, in the assembly of intellectual persons.

नरस्याभरणं रूपं रूपस्याभरणं गुणः ।
गुणस्याभरणं ज्ञानं ज्ञानस्याभरणं क्षमा ॥ ॥ ४४७ ॥

A good appearance is an ornament to a person; good character is an ornament to good appearance; erudition is an ornament to good character and forbearance is an ornament to erudition.

क्षमा बलमशक्तानां शक्तानां भूषणं क्षमा ।
क्षमा वशीकृतिर्लोके क्षमया किं न साध्यते ॥ ४४८ ॥

Forbearance is an asset to weak persons and it is an ornament to the strong. By ferbearance everyone can be won ever; what is it that cannot be achieved by forbearance.

न धर्मशास्त्रं पठतीति कारणं न चापि वेदाध्ययनं दुरात्मनः ।
स्वभाव एवात्र तथाऽतिरिच्यते यथा प्रकृत्या मधुरं गवां पयः ॥

A wicked person is bad by nature. just as the milk of the cow is delicious by nature. The learning of the Veda and the study of Sastras do not change his charactor.

अहो नु कष्टसततं प्रवासः ततोऽतिकष्टं परगेहवासः ।
कष्टाधिका नीचजनस्य सेवा ततोऽतिकष्टा धनहीनता च ॥ ४५० ॥

It is a great distress to live away from one's house always and it is still more wretched to live in other's houses It is degrading to serve under unworthy persons and it is worse to suffer from poverty.

(अनुवर्तते)

# कालिदासस्य काव्यशैली

लेखकः श्री ति. गो. अनन्तसुब्रह्मण्यम् • तिरुपति.

ख्यातः कृती सोऽपि च कालिदासः शुद्धा सुधा स्वादुमती च यस्य।
वाणीमिषाच्चण्डमरीचिगोत्रसिन्धोः परं पारमवाप कीर्तिः ॥

—सोड्ढलकृता उदयसुन्दरीकथा.

कालिदासस्य कीर्तिः यथा सूर्यवंशस्य यशः चतुस्सागरपर्यन्तं व्याप्नोत् तथैव व्याप्नोत्। स्वसुप्रसिद्धमहाकाव्ये रघुवंशे रामायणकथां स्वीकृत्य स्वचारुचमत्कारकवितामार्गेण नूतनतया काव्यसृष्टिः कृता कलिदासेन। रघुवंशकाव्ये वाल्मीकिवत् रामकथामात्रं न प्रतिपादितम्, किन्तु रघोः संपूर्णवंशस्य कथा वर्णिता। तथैव अभिज्ञानशाकुन्तले नाटके कालिदासः भारतस्थशकुन्तलोपाख्यानात्, पद्मपुराणाख्यानाच्च कथाभागं संगृह्य स्वकपोलकल्पितकाव्यपथा नवीनशैल्या च कथाभागं निर्ममे। नाटकद्वारा दुष्यन्तस्य प्रागल्भ्यं, औन्नत्यं तथैव शकुन्तलायाः अप्राकृत – पवित्रपातिव्रत्यञ्च दर्शितं कविना। तादृशमहाकविस्तु रघुवंशे स्वनम्रतां निवेदयति "मन्दः कवियशःप्रार्थी" ति "प्रांशुलभ्ये फले लोभादि" ति च।

कालिदासस्य दृष्टिः अत्यन्तसूक्ष्मरूपिणी मानवस्य हृदयस्थान् विषयान्भावांश्च एकीकृत्य स्वकाव्ये न्यरूयत्। शाकुन्तलनाटके चतुर्थेऽङ्के शकुन्तलायाः पतिगृहप्रेषणसमये महर्षिः कण्वः अत्यन्तदुःखभूयिष्टस्सन् वक्ति—

अहं तावत् शकुन्तलां यत्र कुत्राप्यलभे अपोषयं च। न तु अहं तस्या जनकः। तथापि एवं

मां शोचयति शकुन्तलावियोगः। किन्तु गृहस्थाश्रमे वसतां मनुष्याणां स्वकन्यायाः पतिगृहप्रेषणविषये कीदृशं दुःखं स्यादिति मया किञ्चिदपि वक्तुमशक्यम्। तत् मनसापि अचिन्तनीय मेव स्यात् इति ज्ञापयति अनेन श्लोकेन--

"यास्यद्य शकुन्तलेति हृदयं संस्पृष्टमुत्कण्ठया,
कण्ठः स्तम्भितबाष्पवृत्तिकलुषश्चिन्ताजडं दर्शनम्।
वैक्लब्यं मम तावदीदृशमहो स्नेहादरण्यौकसः,
पीडयन्ते गृहिणः कथं नु तनयाविश्लेषदुःखैर्नवैः॥

इति। एतादृशवर्णनरूपेण कालिदासः मानवानां हृदयस्थहावभावान् बहिराकृष्य स्पष्टं दर्शयति।

रघुवंशे विश्वामित्रः दशरथं राघव आत्मसहायार्थं प्रेषयितुं अयाचत। तदा दशरथमुखेन पितुः, पुत्र विषये सहजप्रेमातिशयश्च सुन्दरतया नैसर्गिकवर्त्मना वर्ण्यते कालिदासेन। कवेः हृदये मृदुहृदयानां रीतीनां प्रतिफलनं तत्तत्काव्येषु दृश्यते। न केवलं सामान्य--मनुष्यजीवनविषये, किन्तु वनचराणां, लतादिवनस्पतीनां मनोभावेष्यपि कृताभ्यूहोऽयं कविः। तेषां हार्दमार्दवं अस्य काव्येषु दरीदृश्यते। सर्वे लोकाः चराचरात्मानः कालिदासस्य मनोविलासकल्पनारुचिरे काव्ये पतितास्सन्ति। यथा दर्पणः सकलवस्तुप्रतिबिम्बानि दर्शयति तथैव लोकोत्तरगुणातिशयान् विषयान् अस्माकं पुरतः निक्षिपति अयं कविः स्वीयकाव्येषु। पशुपक्षिणां सल्लापरूपेण वन - गिरिनद्यादिवर्णनमुखेन च कवेः वर्णनानैपुण्यं, रसधारा अस्माभिरनुभोक्तुं शक्यते।

जनसामान्येन सह कविः तादात्म्यं भजते। लोके जनसमूहे याः याः भाषाः, यानि

यानि भूषणानि, यानि यानि वसनानि तानि सर्वाणि आकलय्य स्वरचनापात्रेषु आवेश्य अस्मान् पुलकितान् करोति। वेषभाषादिमात्रं न, किन्तु हावभावादिमानसिकविकारांश्च, स्फुटं निदर्शयति।

कालिदासस्तु प्रकृतिसौन्दर्ये बद्धमनस्को भूत्वा स्वरचनायां तत् निवेशयति। रघुवंश-कुमारसंभवकाव्ययोः, तथैव त्रिषु नाटकेषु, गीतिकाव्ये मेघदूतेऽपि प्रकृतिलावण्यं नानाप्रकारेण दृष्ट्वा, संकलय्य च तत्र तत्र उचितस्थलेषु गुंफितवान्। तद्वर्णने सहजभावेन तत्र तत्र सजीवरूपेण अस्मान् भ्रामयति। धूमज्योतिस्सलिलमरुद्रूपे मेघे दौत्यकर्म अतीव कल्पनारूपेण, गाम्भीर्येण, सजीवतया च आवेशयत्। अपि च शाकुन्तले पात्रविशेषद्वारा मानवविशेषाभिव्यक्तिः तेन स्पष्टीक्रियते।

महाकविः कालिदासः नगाधिराजस्य हिमालयस्य वर्णनं अतीव सुन्दरतया कुमारसंभवे कृतवान्। पृथिव्याः मानदण्ड इव वर्तते अयं पर्वत इति वर्ण्यते अनेन। एतेन विज्ञानविद्यायां प्रवीणः अयं इति वक्तुं शक्यते। अस्मिन् गिरौ वायूद्धतखनिजधूळिसंभूतान्नानावर्णान् दृष्ट्वा अप्सरसः अकाले सन्ध्याकालभ्रान्त्या सायंतनं शृंगारालंकरणं कर्तुं आरभन्ते। यज्ञोपयोगिन्यः सामग्र्यः, ओषधयश्च अत्र सन्ति। पृथिवीधारणविषये अतिक्षमतां च दृष्ट्वा प्रजापतिः एतस्य पर्वतस्य नगाधिराज इति नाम ददौ, इति च। शाकुन्तले कण्वाश्रमस्य वर्णने आश्रमस्य स्वाभाविकं रामणीयकं तत्रस्थसन्निवेशश्च अतिसुन्दरतया वर्ण्यते "नीवाराः शुकगर्भकोटरमुखाद्भ्रष्टास्तरुणामधः" इति श्लोकेन।

मेघदूते निर्विन्ध्या नदी विलासिनीरूपा नायिका इव कविना चित्रीयते। "वीचिक्षोभस्तनितविहगश्रेणिकाञ्चीगुणायाः" इत्यनेन पद्येन प्रदर्शितं

मानवस्य प्रकृतेः रागरूपसम्बन्धस्य परमोदात्तं वर्णनं विद्योतते। ईदृशसुन्दरवर्णनोदाहरणं कुत्र वा लभ्येत? तथैव विरहिण्याः निर्विन्ध्यायाः विरहवर्णनं स्वानुभूतिरूपेण करोति कविः "वेणीभूतप्रतनुसलिलाऽसावतीतस्य सिन्धुः" इति।

अपि च शाकुन्तले मानवजाति-पशुजात्योः स्नेहानुरागः कालिदासेन कल्पितः। शकुन्तलायां पतिगृहं प्रति गच्छन्त्यां सत्यां मृगशाबकः तस्याः चेलं आकर्षति। तत्र कवेः मानवपश्वोः मैत्री कथंभूतेति सम्यक् प्रकटीकृता दृश्यते। अत्र मित्रस्य सौहार्दं, प्रेमातिशयञ्च अभिव्यनक्ति कविः। शकुन्तला तस्मिन् मृगशाबके स्वपुत्रवात्सल्येन, घासादिदानेन च पालनपोषणयोः च व्यग्रचित्ता अभूत्। अतः तद्गमनावसरे स्वहार्दं, बान्धव्यं, वात्सल्यं च अदर्शयत् मृगकिशोरः। एतादृशवात्सल्यरूपं प्रेम कालिदासेनैव वक्तुं शक्यम्।

कालिदासः शृङ्गारकविरिति प्रसिद्धः। सः स्वशृङ्गारानुभवं स्वकाव्येषु प्रादर्शयत्। स्वरचनासु शृङ्गाररसस्यैव प्राधान्यं दत्तमस्ति। संयोगविप्रलम्भशृङ्गारयोः स्वानुभवः सम्यक् प्रतिपाद्यते। रघुवंशे अजस्य इन्दुमतीविषयकः विप्रलम्भशृङ्गारः अतीव सुन्दरतया विराजते। तथैव मेघदूतेऽपि विप्रलम्भशृङ्गारः उच्चकोटिं भजते। शाकुन्तले द्वयोः शृङ्गारयोः एकत्र समावेशः कृतः।

तथैव करुणरसेऽपि कविरादर्शपुरुषः। कुमारसम्भवे मदनदहनं उर्वश्याः रूपान्तरप्राप्तिः, शकुन्तलायाः निरादरः इत्यादिभागेषु कालिदासः करुणरसस्य प्राबल्यं प्रतिपादितवान्।

तथापि सर्वेषां रसानां अवसानं शान्तरसे अवतरति। एतस्य काव्यस्य पठने मनसि शान्तिरपि जायते। "अपि ग्रावा रोदित्यपि दलति वज्रस्य हृदयं" इति भवभूतिवाक्यप्रकारेण कालिदासस्य रचनापि वज्रहृदयमपि दलयति। (अनुवर्तते)

# संस्कृत - सप्ताहम्; नवदेहली

"अवरः"

विश्वसंस्कृतसम्मेलनं नवदेहल्यां २६-३-७२ दिवसे भानुवासरे प्रातः (१०) दशवादनादारभ्य ३१-३-७२ भृगुवासरे, सायं अष्टावादन (८) पर्यन्तं महता संरम्भेण, सुदीर्घेण वैविध्यपूर्णेन च कार्यक्रमेण सुसम्पन्न मासीत् ।



२६-३-७२ दिनाङ्के भारत राष्ट्रपतिः श्रीमान् वि.वि. गिरि महोदयः संस्कृ-प्रारम्भोत्सवः तमधिकृत्य एव मुपन्यास्थत् – विगत (भूत) वर्तमानयोः प्राक्पश्चिमयोश्च सजीव मनुबन्धविधानं संस्कृतमेव भवितुमर्हतीति अवधेयम्; अन्ताराष्ट्रीय-सुहृद्भावनायाः संस्कृतमत्यन्तमुपकारकमभूत्। विद्वांसः सुधियः भारतीया अभारतीयाश्च, सर्वे संभूय अन्ताराष्ट्रीयसमैक्यभावनासमुद्दीपकं अशेषशेमुषीवैभवबृहत्कोशं संस्कृतं भावयन्तु; यतस्तस्मिन् न्यायपालन - राज्यपालन - तत्त्वशास्त्र - वैद्यशास्त्र - गणित - खगोल - वास्तुशास्त्रादि जीवनशास्त्राणां क्षेत्राणि बहूनि विराजन्ते। एवं च भाविन्याः सन्ततेः संस्कृतं अत्यन्तमुपकारकं भाविष्यतीति, तथा च संस्कृतं सर्वमान्यं भवत्विति।

केन्द्रीयशिक्षामन्त्रिणा श्रीमता प्रोफसर् एस्. नूरुल् हसन् महोदयेन - भारते विश्वविद्यालयेभ्योऽन्यत्र त्रिसहस्रपर्यन्तं संस्कृताध्ययनाय उपकुर्वाणाः संस्थास्सन्तीति प्रोक्तं; संस्कृताध्ययनस्य कृते स्वीकृताः विविधोपायाश्च विज्ञापिताः।

सभाध्यक्ष्यं स्वीकृतवता केन्द्रमन्त्रिणा श्रीमता डा. करणसिंग महोदयेन संस्कृतस्य विश्वव्यापकत्वं प्रतिपादितं; "संस्कृतं न केवलं भारतीयं अपितु तद्विश्वजनीन मित्युपन्यस्तम्। भारतस्य कीर्तिप्रतिष्ठाप्रदं यत्किञ्चिदस्ति चेत्तर्हि संस्कृत मेवेत्यत्र न कोऽपि सन्देहः" इति रीत्या च संस्कृत वैभवं कीर्तितम्।

सोवियट् यूनियन् प्रोफसर् इ. पि. चेलिषीव महाशयः स्वदेशे संस्कृतस्य अध्ययनं विस्तृतरूपेण क्रियत इति वदन् तत्प्रशस्त्यमवोचत्।

पश्चिमजर्मनी प्रोफसर् पाल् थीमी महोदयः शान्तिपूर्वकसहजीवनविधानाय संस्कृतं अत्यन्तोपयोगकारीत्यभणत्।

२७-३-७२ दिनाङ्कात् ३१-३-७२ दिनाङ्कपर्यन्तं प्रवृत्तैः मध्याह्नीयकार्यक्रमैः- विषयबिचारः कलाप्रदर्शनं च ऋग्यजुस्सामाथर्व वेदपारायणैः, संस्कृतपद - कीर्तनगानैः अवधान - योगविद्या - प्रदर्शनैः, अष्टाध्यायी - यन्त्रप्रदर्शन - व्याकरणावधानविधानैः, पुस्तकप्रदर्शिनीभिः, रात्रिकार्यक्रमैः गीतगोविन्द - विक्रमोर्वशीय - मेघमेदुरमेदिनीय - अनार्कली नृत्य - नाटक- कविसम्मेलनादि प्रदर्शनैः काव्यगानैश्च विश्वसंस्कृतसम्मेलन मत्युज्ज्वलं व्यराजत ।

कार्यक्रमसंचालकेन श्रीमता डा. आर्. के. शर्म महोदयेन विषय विचार आमन्त्रणोत्सवः समावेशेषु पठनविमर्शनार्थं (५००) पञ्चशतानि निबन्धपत्राणि निबन्ध प्राप्तानि इति पत्राणि प्रकटितम् ।

श्रीमता डा. राघवन् महोदयेन अन्ताराष्ट्रीय संस्कृताध्ययनसंघस्य युनेस्को याजमान्येन स्थापनमावश्यक - प्रस्तावाः मिति प्रस्तावः प्रतिपादितः पारितश्च विश्वसंस्कृतसम्मेलनेन । देशे देशे च संस्कृताध्ययनं प्रवर्धयितुं, समन्वितविधया भावविनिमय मितोऽप्यधिकं भावयितुं, प्रसिद्ध संस्कृतपुस्तकानां प्रपञ्चप्रमुखभाषासु अनुवादं कारयितुं, आलोचनात्मकग्रन्थान् प्रकाशयितुं, प्रपञ्चभाषाभिः संस्कृतमध्येतुं, क्रमानुसारि - पाठचपुस्तकानि स्वल्पमूल्येन प्रकाशयितुं च बहवः प्रस्तावाः पारिताः सम्मेलनेन ।

विशिष्य भारते राष्ट्रीयसंस्कृतग्रन्थालयं स्थापयितुं, विदेशीयपण्डितानां अत्र अध्ययनसौकर्यं कल्पयितुं, हस्तलिखितग्रन्थानां परिशोधितांशानां ज सत्वरप्राप्त्यै प्रयत्नं कर्तुं, शिक्षा - क्षेत्रे सर्वत्र भिन्नभिन्न दशासु संस्कृताध्ययनस्य समुचितं स्थानं

केन्द्रीयप्रादेशिकसर्वकारैः कल्पयितुं च प्रस्तावा आमोदिताश्च।

अमेरिका संयुक्तराष्ट्रादागतः संस्कृतप्रतिनिधिः प्रौ. W. नार्मन् ब्रौन् भाषणानि महोदयः संस्कृताध्ययनस्य कार्यान्वयितायाः आवश्यकतां प्रतिपादयन्, तत एव अन्तश्चैतन्यप्राप्तिः भविष्यतीति आत्मनो विश्वासं प्रकटीचकार। रंगमंचे, व्यवहारिकक्षेत्रे, आध्यात्मिकप्रपञ्चे च संस्कृतस्य प्रदर्शनं नृत्यनाटकादिना, दैनंदिनव्यवहारयोग्यतासम्पादनेन, योगासनाभ्यासप्रदर्शनेन च प्राप्तां आत्मनः संतृप्तिमाविष्करोति स्म सः।

फ्रान्स् देशादागतः संस्कृतप्रतिनिधिः डा. फिलोजन् महाशयः संस्कृतं जीवद्भाषेति, भारतीयसंस्कृतेः प्रपञ्चमान्यता अस्तीति च अभ्यभाषत।

जपान् देशीयः प्रो. हाजिमीनाकमुरा महाशयः संस्कृतं प्रपञ्चगौरवभाजन मभूदिति, अस्य विश्वसंस्कृत सम्मेलनस्य सफलता अद्यैव अनुभूयत इति वदन् तदायोजकेभ्यः कृतज्ञतां आविश्चकार।

इण्डोनीषिया संस्कृत प्रतिनिधिः विश्वमानवप्रीतिं वर्धयितुं उदारोदात्तभावं व्यापयितुं च संस्कृतप्रेम आवश्यकमिति व्यनक्ति स्म।

श्रीमान् आर्. एन्. दण्डेकर् (पुना) महोदयः संस्कृतं विश्वव्यापक मिति, न जातिमतादिकं कलयतीति, एतदेव भारतीयं उत्तमं माध्यमं अन्योन्यव्यवहारायाऽभूदिति "यावत्स्थास्यन्ति गिरयः ..... तावदेव हि संस्कृतं" इति च उद्घोषयामास।

श्रीमान् सुनीतिकुमारः "अन्धाना मस्य दर्शनं" इति रीत्या दिव्यचक्षुः प्रदाने संस्कृतं प्रभवतीति; संस्कृतेः वैविध्यसामग्र्याः, सहकारावश्यकतायाः, स्वतन्त्रता - न्याय - विश्वासादि मानवोत्तम भावव्याप्तेश्च संस्कृतं निश्शब्दं उपकार मारचयतीति; साष्टाङ्गप्रणिपातं

'प्रचोदनाय यो योगः'— उपदिशत्संस्कृतमेव आप्तभावस्य आर्जवस्य च मार्गदर्शकमिति उपन्यास्थत् ।

अखिलभारतीय संस्कृतसाहित्य सम्मेलन मन्त्री महात्मनो मालवीयमहोदयस्य व्यवसायस्य, मूलप्रेरणायाश्च संस्कृत मेव निदान मासीदिति, अतः "उत्तिष्ठत, जागृत" इति संस्कृतप्रतिनिधीनुद्बोधयन्, भारतीयसंस्कृतिः 'वसुधैक कुटुम्बकम्' इति ध्येयमेव पुरो निदधातीति निगमयन् कार्यकर्तृभ्यः कृतज्ञता माविश्चकार ।

केन्द्रीय-उपमन्त्रिणा श्रीमता डि. पि. यादवमहोदयेन स्वागतभाषणे संस्कृताध्ययनाय तत्प्रचाराय च केन्द्रीयसर्वकारेण पादोनत्रिकोटिपरिमित - द्रव्यराशिः चतुर्थयोजनायां अनुप्रदत्त इति राष्ट्रीयसंस्कृतग्रन्थालयः सुसम्पन्नो भविष्यतीति च आशा प्राश्यत ।

श्रीमान् उपराष्ट्रपतिः जि. एस्. पाठक महोदयः आमन्त्रण-

8

आमन्त्रण भाषणम् भाषणे फलं कष्टसाध्यं, किन्तु प्राप्यत एव इति, सर्वभाषाणां मूलं संस्कृतमिति; एकं समाराधनं, तदीय मेव सर्वान् अनुबन्धबन्धेन बध्नीयादिति, सक्रियं विश्वजनीन च संस्कृतं, भारतं विश्वेन - विश्वं च भारतेन साकं अनुबध्नीयादिति च वदन् राष्ट्रीयशिक्षा - क्षेत्रे तदध्यन मत्यन्तावश्यकमिति सुदृढं अवोचत् ।

केन्द्रीयोपमन्त्रिणी श्रीमती डा. सरोजिनीमहिषी अध्यक्षीयभाषणे "एकं सद्विप्रा बहुधा वदन्ती"ति न्यायेन संस्कृतस्य विविधदृक्पथैः अनुसन्धानमावश्यकमिति, अज्ञातमिति हेतोः संस्कृतं मृतमिति कथन मयुक्तमिति, वटबीजान्तर्गतमहावृक्षवत् संस्कृतं भारतान्तर्लीनमस्तीति, प्रभुमित्र-कान्ता-सम्मिततया संस्कृतसाहित्यं त्रिविधं सत् वागर्थप्रतिपत्तयेऽत्यन्तमुपकरो - तीति, ऋषीणां पुनराद्यानां वा-

च मर्थोऽनुधावतीति न्यायेन सर्वाण्यपि जीवनशास्त्राणि संस्कृत मेव उपजीव्य प्रवर्तन्ते इति, संस्कृतं "वसुधैव कुटुम्बकं" स्थापयितुं अलमिति, भावप्रकटनाय संस्कृतं निजपदसन्दर्भैः अत्यन्तं समृद्धमिति तत्प्रशस्ति मुदघोषयत् ।

अन्ते श्रीमती संगीतकलानिधिः एम्. एस्. सुब्बुलक्ष्मीः प्रसिद्धगायकशिरो - मणिः संस्कृतकीर्तनानां श्लोकानां गानसभा अष्टपदीनां च गानेन सभां अन्वरंजयत् ।

एवं विश्वसंस्कृतसम्मेलनं भारतीयैः अभारतीयैश्च विद्वत्सल्लजैः नानादेशेभ्यः समागतैः प्रतिनिधिभिः प्रेक्षकैश्च समाकुलं सत् संस्कृतं सजीवं समदर्शयत्, नवदेहल्यां विज्ञानभवने संस्कृत नगरे च ।

"जयतु भारतं,
जयतु संस्कृतम्"

---

## विहगावलोकनम्
(चतुर्थपृष्ठात्)

प्रतिदिनं सुमनोहरः सांस्कृतिककार्यक्रम आयोजितः यदनुगुणं प्रारंभदिने मध्याह्ले संस्कृतध्रुवपदगीतमालपितं श्री सियारांतिवार्यधिष्ठितेन गायकबृन्देन । ततश्च प्रतिदिनं श्री मवलंकरनाटचशालायां रात्रौ ८-३० वादनतः विभिन्नानि प्रदर्शनानि आयोजितानि यदनुगुणं द्वितीयदिने केरलकलामंडलेन कूडियाट्टम् नृत्यं प्रदर्शितं, यत्र सुन्दरकाण्डकथाभागोऽभिनीतः सुमधुरघटवाद्यकाकलीस्वरवादसंवर्धितरंजनः । ततश्च श्रीमत्या संयुक्तपाणिग्राहिणा ओरिस्साशैल्या गीतगोविंदगीतानि स्वनृत्यवैभवेन परिपूरितानि कर्णश्रोत्रपेयानि आरचितानि ।

तृतीयदिने च मुंबायीस्थब्राह्मणसभया विक्रमोर्वशीयं

प्रदर्शितं यच्च सहृदयान् कालिदासकलाकौशलावगमनेन साकं सामाजिकान् परवशयति स्म।

चतुर्थदिने च वंगदेशीयया प्रचयन्या प्रदर्शितं ऊहात्मकं नाटकं डा. जे. बिना डा. रामचौधरिणा च रचितं "मेघमेदुरमेदिनीयम्" नामकं यक्षस्य शापात्पूर्वस्थित्यभ्यूहकं विविधछायादृश्यनिर्दिष्टसन्दर्भं सामाजिकानां मनांसि विकासति स्मानंदोदयेन।

पंचमे दिवसे डा. वी. राघव महोदयविरचितं अनार्कली नाटकं प्रदर्शितं यत्र बहूनि पात्राणि तत्तत्स्वभावानुगुणं अभ्यनयन्। चारित्रकोऽयं कथांशश्च विरुद्धभाषापरिगुंफितोपि रंजयति स्म विलक्षणम्।

षष्ठे दिने च संस्कृतकविसम्मेलनं विविधरसभरितं संस्कृतस्य नवनवोन्मेषविशेषं न्यरूपयत्।

अन्तिमदिने महोत्सवोपसंग्रहवेलागीतैः श्वेताश्वतरोपनिषन्मंत्रैः ऋग्वेदमंत्रैः भातरयातो- पर्मंत्रिण्याः श्रीमत्याः सरोजिनी महिष्याः अध्यक्षसुभाषितैः, श्रीमत्याः सुब्बुलक्ष्म्याः सुललितसंगीतकेन च सामाजिकाः आत्मन अमरान् अमरनगरीगतान् अमरवाणी - व्यवहारिण एवामन्यन्त।

इदं च महदाश्चर्यकरं (आन्ध्र) हैदराबादवास्तव्यः संस्कृतवृद्धः श्री गुंडेरावहर्कारे महाभागः स्वनिर्मितं आष्टाध्यायीयन्त्रं प्रादर्शयत् यत् विद्युत्प्रभापातनपूर्वकं तत्तद्रूपनिष्पादकसूत्राणि क्रमशः निरूपयति। अथ च श्रीमता पूनावासिना श्रीपाद अट्लेकर महोदयेन अष्टाध्यायीनिष्णातत्वं निरर्गलं प्रदर्शितम्। सूत्रसूचनेन आध्यायं पादं सूत्रसंख्यां च सः अलिखत् फलके। सूत्राधस्थोदाहरणे ज्ञापिते सूत्रं अपठत्। सूत्राध्यायसंख्यादिनिर्देशे च सूत्रमन्ववदत्, सूत्रस्थपदविशेषस्य कथने च तत्पदघटितानि च सकलान्यष्टाध्ययीस्थानि सूत्राणि सस्थानसंख्यानिर्देशमावर्तयत्।

नेपालीयदाङ्गनगरस्थ-जनता-महाविद्यालयछात्रा अष्टवर्ष-देशीया बाला च संस्कृते अनर्गलमुपान्यस्थत् ।

बहुलकार्यक्रमाणां एककालकलयैव बहुत्र निर्वाहात् सकलानुभवाय सभ्याः अशक्ता अभवन् एकैकत्रैव रसमग्ना अन्यत्र गन्तुमपारयन्तः ।

सारतः इदं सम्मेलनं प्रपंचे एव संस्कृतस्य प्रभावातिशयं प्रकाशयत् विशेषतः दूरदूरस्थितानां संस्कृतबन्धूनां संबन्धबान्धव्य माबध्य तन्मूलं च स्वतेजो व्यस्फारयत् प्रपंचे इति भाति ।

देवीं वाचमजनयन्तदेवाः
तां विश्वरूपाः कवयो वदन्ति ।

❖❖❖❖❖❖❖❖❖❖

## आन्ध्रप्रदेशे प्राच्यविद्यालय पर्यवेक्षकः

कडपनगरे राजकीय कलाशालायां संस्कृताध्यक्षत्वेन दशवर्षेभ्यः संपादित महाकीर्तिः श्रीमान् पी. नूकाराव महोदयः आन्ध्रसर्वकारीयप्राच्यविद्यालयपर्यवेक्षत्वेन नियुक्त इति महानन्दनिर्भरास्स्मः । संस्कृतभाषानिष्टातोऽयं नियतं आन्ध्रप्रदेशे संस्कृतस्य सर्वतोमुखविकासमवश्यं साधयिष्यति स्वीयाधिकारवेलायामिति दृढं विश्वसिमः ।

ति. कं. तिरुवेङ्कटाचार्यः,
प्रधानमन्त्री.



# पाठकेषु विज्ञापनम्

गैर्वाणी नववर्षवयः अतीत्य जनवरि मासे दशमे वयसि पदं न्यधात्। इयं चैकवर्षपर्यन्तं त्रैमासिकी स्थित्वा द्वितीयवत्सरात् मासिकी प्रकाश्यते। द्वित्रसन्दर्भान् विहायैषा मासक्रममनपहाय बहिरायातीति सुविदितं भवताम्। अद्यतनकाले संस्कृतपत्रप्रकाशनं कीदृशक्लेशबहुलमिति सर्वविदितम्। तत्रापि एतत्पत्रस्य क्लेशा विलक्षणा अनुभूयन्ते। तेषां कीर्तनेन नात्र किमपि प्रयोजनम्। रचनादौर्लभ्यं रसिकवैरल्यं चेति खेदयति चेतः निर्वाहकाणाम्। विषयवैविध्येन सारल्येन वैचित्र्येण नूतन-रचनाभ्यासप्रदर्शनेन च सुतरां प्रशंसितमिदं पत्रं आर्थिकदौर्बल्येन व्यथते। माकिं उपशतसंख्याका एव सदस्याः छंदं अर्पयन्ति, अव-शिष्टा मूर्तयश्च निर्मूल्यमेव विभज्यन्ते वारं वारम्। केचन महानु-भावाः विना याचनं प्रेषयन्ति स्वीयं छन्दं उचितकाले। परन्तु बहूनां न द्रवति हृदयं एकदापि। प्रेषव्ययबहुले काले, परिमित-परिवारवत्या अनया पत्रिकया प्रतिव्यक्ति विज्ञापनं असाध्यमिति हेतोः एवं विज्ञाप्यते यत् अनुपदं अथवा यावच्छीघ्रं, स्वीयं छन्दं (रू ४–००) प्रेषयित्वा पोषयन्त्विवति।

रूप्यचतुष्टयं यद्यपि भवतां उद्देशे अल्पमेव तथापि गैर्वाण्याः महते प्राणलाभाय संपद्येत। अन्यथा न केवलमिदं गैर्वाणी ह्रास-मेष्यति, अपितु स्वाश्रयभूतां संस्कृतभाषाप्रचारिणीं सभामपि ह्रसयिष्यति।

अतः पुनर्निवेद्यते पाठका स्वस्वमनसा संचिन्त्य यथाशीघ्रं छंदं अर्पयितु तर्पयितुं च गैर्वाणीम्।

इति,

ति[illegible] [illegible]वेङ्कटाचार्यः,

[illegible]मन्त्री.

आन्ध्रप्रदेशसर्वकारेणानुमोदिता R. C. No. 27-A 3/65 Dated 14-7-65.

R. N. 1840/60. Postal R. No. H. 493

भारतसर्वकारेण पुरस्कृता च

वार्षिकम् ४-००

# गैर्वाणी

## प्रहेलिका

वायुमित्रसुतबन्धुवाहनारातिभूषणशिरोविलंबिनी ।
तज्जवैरिभगिनीपतेस्सखा पातु मां कमललोचनो हरिः ॥

अर्थः - वायोर्मित्रं अग्निः, तत्सुतः षण्मुखः, तद्बन्धुस्सोदरः गणाधिपः, तस्य वाहनं मूषिकः, तस्य अरातिः सर्पः. तद्भूषणः शिवः, तस्य शिरः अवलंबमाना गंगा, तज्जः गांगेयः भीष्मः, तस्य वैरी शिखण्डी, तस्य भगिनी द्रौपदी, तस्याः पतिः अर्जुनः, तस्य सखा मित्रं, कमललोचनः पुंडरीकाक्षः, हरिः श्रीकृष्णः, मां, पातु रक्षतु ।

Publi- ...natha Iyer B. A; B. L., Advocate
... Sabha, Chittoor (A. P.)
... K. Thiruvengadacharya
...ittoor (A. P.) C 2000